## I.2.3. भारतीयः वाक्यसिद्धान्तः

भाषिक-संरचनामधिकृत्य विचारप्रसङ्गे सर्वप्रथमं वाक्य-संरचनाविषये विचारः आवश्यकः प्रतिभाति। यतोहि अस्माकं विचारशैल्यां वैविध्यं वाक्यमाध्यमेनैव प्रकटीभवति। यद्यपि ह्विटनेसदृशाः केचन भाषावैज्ञानिकाः तथ्येनैतेन सहमताः न सन्ति यद् "वाक्यैरेव सम्भाषणस्य प्रारम्भः स्वीकर्तव्यः" इति, किन्तु आधुनिकैर्गवेषकैरनुसन्धानपूर्वकमेतत् प्रमाणीकृतं वर्तते यद् भाषायाः प्रारम्भिकदशायां वाक्यानाम् अथवा वाक्यान्तर्गतानां शब्दानामेव प्रयोगः क्रियते। वालानां भाषा-शिक्षण-प्रवृत्तौ तत्सम्वद्ध-प्रविधौ वा यदि दत्तावधानाः भवेमस्तर्हि वयं द्रष्टुं शक्नुमः यत्ते सर्वप्रथमं वाक्यान्येव अभ्यस्यन्ति, प्रयुञ्जते च। वस्तुतस्ते वाक्यैरेव चिन्तयन्ति तथा अवगच्छन्ति अपि। एवं क्रमशस्तेषां पद-ज्ञानं शब्द-ज्ञानञ्च वाक्यमाध्यमेनैव भवति।

यद्यपि वाक्यानां विभिन्नाः अवयवाः सम्भवन्ति तथापि सम्पूर्ण-विचाराणां वाहकं वाचकं वा अखण्डं वाक्यमेवास्ति। अर्थदृष्ट्या यद् वाक्यमस्ति रूप-दृष्ट्या सः ध्वनीनां समूह एव वर्तते। क्रमशः वाक्यावयवानां विकासः अभवत् तथा शब्दैः वाक्यविश्लेषणं च समभवत्। अत एव वाक्यानां, शब्दानाञ्च स्वतन्त्र-सत्ता सर्वैः स्वीकृता वर्तते।

एतया पूर्वपीठिकया एतत् स्पष्टीभवति यद् भाषायाः प्रयोगदशायां वाक्यानां प्राधान्येन महत्त्वं वरिवर्ति। यतोहि वाक्यैः विना भाषायाः प्रयोगः, सम्भाषणं वा न सम्भवति। निर्वचनाधारेण भाषा-वाक्ययोः अर्थसाम्यमपि द्रष्टुं शक्यते। भाषायाः व्युत्पत्तिः - भाष्यते इति भाषा (भाष्+अक्+ टाप्) इत्येवं क्रियते तथा वाक्यस्य च व्युत्पत्तिः - *उच्यते इति वाक्यम्* (वच् + ण्यत्) इति भवति ।

वस्तुतः वाक्यमयमिदं व्यवहारजगत्। शब्दाभिव्यक्तेऽस्मिन् लोके अभिप्राय-सङ्क्रमणार्थं वाक्यानां महत्त्वपूर्णा भूमिका स्वीकर्तव्या एव। वाक्यान्येव अर्थविधायकानि भवन्ति। तानि च शब्दान् विना कल्पयितुं न शक्यन्ते। शब्दाश्च वर्णैर्विना न सम्भवन्ति। अत एव योगशिखोपनिषदि उल्लिखितं वर्तते -

*अकारादिक्षकारान्तान्यक्षराणि समीरयेत्।*
*अक्षरेभ्यो पदानि स्युः पदेभ्यो वाक्यसम्भवः।।*

(योगशिखोपनिषद् ३५. ६)

अपरं च भर्तृहरिणा अपि वर्ण-पद-वाक्येषु न तथा कश्चन भेदः प्रकल्पितः। यतोहि तेनोक्तम् -

*पदे न वर्णाः विद्यन्ते वर्णेष्ववयवाः न च।*
*वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन।।*

(वाक्यपदीयम् १.७३)

पातञ्जल-योगसूत्राधारेण पातञ्जलाः योगिनः अपि प्रतिपादयन्ति यत् श्रूयमाणा एव वर्णाः वाक्य-शब्देन व्यवह्रीयन्ते इति। वैयाकरणेषु प्राचीनाश्च अभिप्रयन्ति यद् - वर्णमालायां प्रत्येकं पदमेकं वाक्यं भवतीति प्रतीतिरस्ति। अतः वाक्य-विचारप्रसङ्गे वाचः तथा तदङ्गभूतयोः वर्ण-शब्दयोश्च चर्चा अप्रासङ्गिकी न वर्तते।

शब्दस्य महत्त्वमाचार्यैः बहुधा प्रतिपादितं वर्तते। संसारे यदि शब्दाख्यं ज्योतिर्नाभविष्यत् तर्हि भुवनत्रयं नूनं तमसावृत्तमभविष्यदिति काव्यादर्शे दण्डिनोद्घोषितम् -

*इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।*
*यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।*

(काव्यादर्शः १.४)

ज्ञानं नाम प्रकाशरूपम्, अज्ञानञ्च अन्धकार-रूपम्। संसारे एवं न किञ्चिज्ज्ञानं वर्तते यत् शब्दं विना व्यक्तं भवितुमर्हति। एतदेव वाक्यपदीये भर्तृहरिणा सुष्ठु प्रतिपादितं वर्तते -

*न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।*
*अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।*

(वाक्यपदीयम् १.१२३)

उपर्युक्तानां वर्ण-शब्द-वाक्य-तत्त्वानामनुशासनं व्याकरणमेव सम्पादयति। वस्तुतः शब्दरूपेण व्याकरणं सर्वविधस्यापि प्रयोगस्य अनुशासनं करोति। अत एव 'शब्दानुशासन'मिति व्याकरणस्य नामान्तरं प्रसिद्ध्यति।'तदस्य तदस्मिन् स्यादि'ति (पा. ५.१.१६) पाणिनिसूत्रस्य व्याख्यानप्रसङ्गे कैयटः प्रतिपादयति यद् "यत्रार्थे लोकाः शब्दान् प्रयुञ्जते तदर्थाभिधायिन एव शास्त्रेणानुविधीयन्ते प्रयोगमूलत्वाद् व्याकरणस्मृतेः"(प्रदीपः पा. ५.१.१६) इति। "महान् हि शब्दस्य प्रयोगविषयः" (महाभाष्ये पस्पशाह्निकम्)इति वदता पतञ्जलिना शब्दस्य व्यापकत्वमपि प्रतिपादितम्। वाक्यपदीये भर्तृहरिः शब्दस्य ज्ञानमयत्वं प्रतिपादयति। वस्तुतः ज्ञानस्यैव शब्दरूपेण परिणामो भवति। शब्दश्च आनन्दरूपः स्वीकृतः आत्यन्तिकसुखदत्वात्, स्वर्गफलदत्त्वाच्च। अत एव पतञ्जलिना महाभाष्ये प्रोक्तं - एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति (महाभाष्यम्, पा. ६.१.८४) इति। अपरञ्च "यः शास्त्रपूर्वकं शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते, अथवा पुनरस्तु ज्ञाने एव धर्मः" (महाभाष्यम्, १.१.१, पस्पशाह्निकम्) इत्यादि महाभाष्यवचनान्यपि शब्दस्य ब्रह्मत्व-पक्षं समर्थयन्ति। परम्परया शब्दमयस्य वाक्यस्यापि महत्त्वमेतेन सिद्ध्यत्येव।

वर्ण-शब्द-वाक्यात्मिकायाः वाचः दार्शनिकं विवेचनं लोके यद्यपि भर्तृहरेः शब्दब्रह्मसिद्धान्तः प्रसिद्धो वर्तते किन्तु एतस्य सिद्धान्तस्य वीजमुपनिषत्सु द्रष्टुं शक्यते । मैत्रेयोपनिषदि उक्तमस्ति -

*द्वे ब्रह्मणी वेदितव्ये शब्द-ब्रह्म परं च यत्।*
*शब्द-ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।*

(मैत्रेयोपनिषद् ६.२२)

वैयाकरणैः न केवलं वाचः किन्तु पृथग्रूपेण वर्ण-शब्द-वाक्यानामपि तुलना ब्रह्मणा क्रियते एव। वाग्ब्रह्मणा सह अक्षरब्रह्म-शब्दब्रह्मसदृशाः सिद्धान्ताः भारतीयपरम्परायां सर्वथा प्रसिद्ध्यन्ति।

**वाग्-ब्रह्म** - एवमेव वागपि वेदेषु उपनिषत्सु च ब्रह्मत्वेन निगद्यते। अत्रास्माभिः विशिष्य बाग्ब्रह्मण एव चर्चा क्रियते। वस्तुतोऽस्मत्परम्परायां वाचः जगत्कर्तृत्वं प्रसिद्धम्। 'वागेव विश्वा भुवनानि जज्ञे', 'वाग्धि

प्रजापतिः' (शतपथब्राह्मणः १.३.६.२७) 'वाग्वै प्रजापतिः' (शतपथब्राह्मणः ५.१.५.६, १३.४.१.१५) 'प्रजापतिर्वै वाक्पतिः' (शतपथब्राह्मणः ३.१.३.२२) इत्यादीनि ब्राह्मण-वाक्यानि च तत्र प्रमाणभूतानि सन्ति। अपरं च प्रजापतिर्हि वाक् तैत्तिरीयब्राह्मणः १.३.४.५) इत्यपरं वचनमपि तथ्यमेतत् समर्थयति।

वस्तुतो वागपि शब्दरूपाऽस्ति। अत एवानेकत्र सा ब्रह्मरूपेण वर्णिता वर्तते। तद्यथा 'वाग् वै ब्रह्म' इति वचनम् ऐतरेयब्राह्मणे (ऐतरेयब्राह्मणः ६.३ १) शतपथब्राह्मणे (शतपथब्राह्मणः २.१.४.१०, १४.४.१.२३, १४.६.१०.५) वृहदारण्यकोपनिषदि (वृहदारण्यकोपनिषद् १.३.२१, ४.१.२) चोपलभ्यते। 'वाग्ब्रह्म' (गोपथब्राह्मणः - पूर्वभागः २.१०) 'वाग्घि ब्रह्म' (ऐतरेयब्राह्मणः २.१५.४.२१) 'वागिति तद् ब्रह्म' (जैमिनीय-उपनिषद् २.९.६) इत्येतानि यानि वचनान्तराण्युपलभ्यन्ते तान्यपि वाचः ब्रह्मत्वं प्रतिपादयन्ति। 'ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते' (छान्दोग्योपनिषद् ६.३.२) इति छान्दोग्योपनिषद्वचनमपि वाचः ब्रह्मणा सादृश्यं साधयति। एवं वाचः ब्रह्मत्वे शब्दस्यापि ब्रह्मत्वमुपपन्नम्।

शब्दतत्त्वस्य चर्चाप्रसङ्गे वाचः परा-पश्यन्ती-मध्यमा- वैखरी-रूपाः प्रसिद्धाश्चतस्रोऽवस्थाः विवेचनीयाः सन्ति। परा वाक् शब्दब्रह्मरूपा मूलाधारे (कुण्डलिन्यां) वर्तते, पश्यन्ती च नाभिप्रदेशे संस्थिता शोभते। मध्यमा हृदि तिष्ठति। एवं च वैखरी कण्ठदेशे वर्तते इति परमलघुमञ्जुषायां स्फोटनिरूपणप्रसङ्गे नागेशः प्रतिपादयति। प्रसङ्गेऽस्मिन् सः अधोलिखितां कारिकामुद्धरति -

*परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।*

*हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।।* इति

आसु चतसृषु वाक्षु वैखरी व्यवहारयोग्या भवतीति ज्ञापयितुं सः वदति -

*वैखर्या हि कृतो नादः परश्रवणगोचरः।*

*मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते।।* इति

अर्थात् यद्यपि मध्यमा-वैखरीभ्यामुभाभ्यां नादः क्रियते तत्र फले भेदः दृश्यते। अनयोर्मध्यमा-नादः स्फोटरूपशब्दस्य व्यञ्जकः, वैखरी-नादश्च सर्वेषां श्रावणप्रत्यक्षविषयो भवति। वस्तुतः परा, पश्यन्ती, मध्यमेति त्रय्यः वाचः सूक्ष्मरूपाः भवन्ति याः गुहायां निहिताः नेङ्गयन्ति, न चेष्टन्ते न वा निमिषन्ति। अतः वैखरीवाचमेव मनुष्या वदन्ति। एतत्प्रसङ्गे ऋग्वेदस्य कश्चन मन्त्रः महाभाष्यस्य पस्पशाह्निकेऽपि उद्धृतोऽस्ति -

*चत्वारि वाक् परिमिता पदानि तानि विदुर्मनीषिणः।*

*गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।।*

(ऋग्वेदः - १.१६४.४५, महाभाष्यस्य पस्पशाह्निकेऽपि उद्धृतम्)

परा वाक् वर्णादिविशेषरहिता चेतनमिश्रा सृष्ट्युपयोगिनी जगदुपादानभूता कुण्डलिनीरूपेण प्राणिनां मूलाधारे वर्तते। सा च कुण्डलिन्याः प्राणवायुसंयोगे व्यज्यते। वाक्षु केवलमियमेव निःष्पन्दा वर्तते। अन्याः पश्यन्त्यादयश्च सस्पन्दाः सन्ति, याः एतस्याः विवर्तरूपाः सन्ति। इयमेव परा वाक् 'सूक्ष्मस्फोट' इत्युच्यते।

अत एव भर्तृहरिणा व्याकरणस्य त्रिविधवाग्विषयत्वं प्रतिपादितम् -

*वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।*

*अनेकतीर्थभेदस्य त्रय्यः वाचः परं विदुः।।*

(वाक्यपदीयम् - १.१४४)

वस्तुतः एतासां चतसृणां वाचां क्वचिद् व्याकृताव्याकृतेति भेदद्वयेन वर्गीकरणं दृश्यते। व्याकृतेति शब्देन पश्यन्त्यादित्रय्याः, अव्याकृतेति शब्देन च शक्ति-शक्तिमदादि-भेदशून्यायाः परावाचः व्यवहारः। एवमेव महाभारतेऽपि वाक्पूर्विकायाः सृष्टेः विषये चर्चा समुपलभ्यते -

*अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।*

*आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।*

(महाभारतटीका, शान्तिपर्व - २३२.२४)

उपर्युक्तायां कारिकायां वाक्-पदेन पश्यन्ती एव ग्राह्या। वस्तुतः तस्याः एव ओंकारो, वेदः, शब्दब्रह्म चेत्यादीनि नामान्तराणि प्रसिद्ध्यन्ति।

**अक्षरब्रह्म** - महाभाष्ये वर्णसमाम्नायः ब्रह्मत्वेन वर्णितः। अक्षरसमाम्नाय-वर्णन-प्रसङ्गे पतञ्जलिः प्रतिपादयति - "सोऽयम् अक्षरसमाम्नायः वाक्समाम्नायः, पुष्पितः फलितश्चन्द्रतारकावत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयेते" (महाभाष्यम्, १.१.२, प्रत्याहाराह्निकम्)। 'ओमित्येकाक्षरं ब्रह्म' इत्यत्र प्रणवः शब्दब्रह्मरूपेण वर्णितो वर्तते। सूतसंहितायां प्रणवः परापरभेदेन द्विविधः कल्पितो वर्तते - 'परः ब्रह्मात्मकः, अपरश्च शब्दात्मकः'। एषोऽक्षरशब्दः शब्दतत्त्वेन स्फोटात्मना स्फोटनाम्ना वा व्याकरणशास्त्रे सिद्धिपथमागतः।

**शब्दब्रह्म** - वैयाकरणेषु पतञ्जलिः शब्दब्रह्मविषये स्पष्टमुल्लिखति। सोऽपि प्रसङ्गेऽस्मिन् साङ्केतिकं वैदिकमभिमतं पल्लवयति। ऋग्वेदादुद्धृतस्य 'चत्वारि शृङ्गा' इत्यादिमन्त्रस्य व्याख्यानावसरे महाभाष्यस्य टीकाकारैः उक्तम् - महान् = परब्रह्मस्वरूपः, देवोऽन्तर्यामिरूपः, साम्यं सायुज्यमिति। अनन्तरं भर्तृहरिः एतदेवाभिमतं विस्तारितवान्। वाक्यपदीयस्य प्रथमे श्लोके सः शब्दब्रह्मणः अर्थरूपेण विवर्तनं दर्शयति। तस्य मतानुसारम् अनादि-निधनं सर्वग्राह्य-ग्राहकाकारवर्जितं तत् शब्दब्रह्म मायासहितं सत् नामरूपात्मकमिदमखिलं जगद् बुद्धौ आकलय्य स्वकालाख्यया शक्त्या तन्मात्रपदवाच्यानि आकाशादीनि उत्पादयति। वाक्यपदीये नैकेषु प्रसङ्गेषु शब्दब्रह्मविषये उल्लेखः प्राप्यते।

*अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।*

*विवर्ततेऽर्थभावेन प्रक्रियाजगतो यतः।।* (वाक्यपदीयम् १.१ )

अनन्तरं नागेशादिभिः लघुमञ्जुषादिग्रन्थेषु शब्दब्रह्मणः महत्त्वविषये चर्चां कृतवन्तः। मञ्जूषायां नागेशः शक्त्याश्रयप्रकरणे शब्दब्रह्मणः स्वरूपमेवं विवृणोति - प्रलयकाले माया परमात्मनि लीयते। परन्तु तस्याः आत्यन्तिको नाशो न भवति। तस्यामवस्थायां सर्वं सुप्तवत् तिष्ठति। ततः यथाकालं मायापुरुषयोः उत्पत्त्यनन्तरं

बिन्दुरूपमव्यक्तं त्रिगुणं शक्तिमत्त्वं च जायते यस्य अचिदंशः बीजम्, चिदचिन्मिश्रोंऽशः नादः, चिदंशश्च बिन्दुरस्ति। तस्माद् बिन्दोः अव्यक्तात्मा वर्णादिविशेषरहितः नादमात्रं रवः समुत्पन्नः, यः रवः शब्दब्रह्मेति संज्ञया निगद्यते इति।

अस्मिन् प्रसङ्गे नैयायिक-मीमांसक-वैयाकरणाभिमत- शब्दस्वरूपज्ञानार्थं मदीयं शोधपत्रं "वैयाकरणाभिमतः शब्दब्रह्मसिद्धान्तः - एकं समाकलनम्" (श्रुतिमहती, रामकरणशर्मणोऽभिनन्दनग्रन्थः, भाग - १ प्रतिभाप्रकाशनम्, दिल्ली, २००८,पृ. २९०-३०१) परामष्टुं शक्यते।

**I. 2.3.1 : विविध-शास्त्रानुमतं वाक्यलक्षणम्**

अर्थबोधजनकस्य वाक्यस्य स्वरूपविषयिणी चर्चा प्राचीनकालादेवोपलभ्यते। विभिन्नैः शास्त्रकारैः वाक्यस्य लक्षणं भिन्न-भिन्नप्रकारेण कृतम्। न केवलं वैयाकरणाः किन्तु नैयायिकाः, मीमांसकाः, आलङ्कारिकास्तथा अन्येऽपि शास्त्रकाराः स्वस्वशास्त्रदृष्ट्या वाक्यस्वरूपं विवेचितवन्तः। तेषां विचारेषु क्वचित् साम्यं वर्तते क्वचिद्वैषम्यं च परिलक्ष्यते। अत्र यद्यपि मुख्यतया वैयाकरणाभिमतं वाक्यस्वरूपं पुरस्कृत्यैव विचाराः प्रस्तूयन्ते तथापि प्रसङ्गतः अन्येषां शास्त्रकाराणां विशिष्य नैयायिक-मीमांसकानामपि केचन विचाराः संक्षिप्य प्रस्तूयन्ते।

अमरकोशकारोऽमरसिंहः वाक्यलक्षणं विधातुकामो वदति -

*सुप्तिङन्तचयो वाक्यम् क्रिया वा कारकान्विता।।*

(अमरकोशः १.६.२)

कौटिल्यः अपि स्वकीये अर्थशास्त्रे वाक्यलक्षणं कुर्वन् वदति -

*पदसमूहो वाक्यमर्थसमाप्तौ शक्तम्।* (अर्थशास्त्रम् १७९)

एताभ्यां प्राचीन-वाक्यलक्षणाभ्यां सुप्तिङन्तपदसमूहो वाक्यं भवतीति अर्थः लभ्यते।

**I. 2.3.1.1 : नैयायिकाभिमतं वाक्यलक्षणम्** - नैयायिकेषु गङ्गेशः स्वकीये तत्त्वचिन्तामणौ वाक्यलक्षणं प्रस्तुवन् वदति - वाक्यत्वं च विशिष्टार्थपरशब्दत्वम् इति।

जगदीशभट्टाचार्यः शब्दशक्तिप्रकाशिकायाः स्वोपज्ञवृत्तौ वाक्यस्वरूपं प्रतिपादयन् वदति - यादृशशब्दानां यादृशार्थविषयिताकान्वयबोधं प्रति अनुकूला परस्पराकाङ्क्षा तादृशशब्दस्तोम एव तथाविधार्थे वाक्यम् (स्वोपज्ञवृत्तिः, शब्दशक्तिप्रकाशिका - १३)। 'स्वार्थबोधसमाप्तः पदसमूहः वाक्यम्' इति तस्याभिमतम्।

**I. 2.3.1.2 : मीमांसकाभिमतं वाक्यलक्षणम्** - 'समभिहारो वाक्यम्' इति मीमांसकाभिमतं वाक्यलक्षणं बहुधा स्वीकृतमस्ति। एतस्य एव लक्षणस्य पल्लवनं परवर्तिभिः मीमांसाचार्यैः त्रिधा कृतं दृश्यते। तद्यथा -

(i) अङ्गत्वघटकीभूतपरोद्देश्यत्व-कृति-कारकत्वान्यतर- पदार्थबोधक-पदकल्पनानुकूलश्रुतपदसन्निधिः, स चाङ्गत्व- घटकीभूत-करणत्व-कर्मत्वान्यतरविषयक-शक्त्यजन्य-शाब्दबोधानुकूलपदसमभिव्याहारो वाक्यम्,

(ii) अङ्गत्वघटक-परस्पर-पदार्थसंसर्गवृत्ति-शक्त्यप्रयोज्य-विषयताक-शाब्दबोधानुकूल-पदसमभिव्याहारो वाक्यम् तथा

(iii) तदर्थश्चाङ्गत्वघटकीभूतं यत्करणत्वं कर्मत्वं वा तदन्यतर-विषयताको यः शक्त्यजन्य-बोधस्तदनुकूलः समभिव्याहारो वाक्यम् इति। (मीमांसारसपल्वलम्, वाक्यविचारः, पृ.३४)

मीमांसासूत्रकारो जैमिनिः "अवशिष्टस्तु वाक्यार्थः" (मीमांसासूत्रम् १.२.४०) इति वाक्यस्वरूपं प्रतिपादयति। लोके वेदे च वाक्यार्थः समानः एव भवति इत्युपर्युक्तस्य सूत्रस्य तात्पर्यम्। मीमांसासूत्रे अन्यत्रापि जैमिनिना वाक्यस्वरूपं द्विधा प्रतिपादितमस्ति। तद् यथा -

(i) साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण (मीमांसासूत्रम् ३.१.२०) इति तथा

(ii) समाप्तं च फले वाक्यम् इति च। (मीमांसासूत्रम् २.३.७)

**I. 2.3.1.3: वेदान्तशास्त्राभिमतं वाक्यलक्षणम्** - श्रीसदानन्दः वेदान्तसारस्य महावाक्यार्थप्रकरणे वाक्यस्वरूपमेवमुपस्थापयति -

*संसर्गो वा विशिष्टो वा वाक्यार्थो नामसम्मतः।*

*अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः।।* (महावाक्यार्थप्रकरणम्, वेदान्तसारः)

**I. 2.3.1.4: आलङ्कारिकाभिमतं वाक्यलक्षणम्** - विश्वनाथकविराजेन साहित्यदर्पणे वाक्यलक्षणं सुष्ठु प्रतिपादितमस्ति। तस्य मतानुसारं योग्यता-आकाङ्क्षा-आसत्तियुतः पदसमूह एव वाक्यं भवति -

वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः। (साहित्यदर्पणः २.१)

चन्द्रालोकस्य टीकाकारेण वैद्यनाथपायगुण्डे-महोदयेन विशिष्टैकार्थ-प्रतिपादक-निराकाङ्क्ष-पदसमूहो वाक्यम् इति वदता स्वकीयं वाक्यलक्षणं प्रस्तुतम्। (चन्द्रालोकटीका, पृ. ८)

**I. 2.3.1.5 : वैयाकरणाभिमतं वाक्यलक्षणम्** - एकतिङन्तार्थ-मुख्यविशेष्यक-बोधजनक-पदसमूहो वाक्यम् इति सर्वसम्मतं वैयाकरणाभिमतं वाक्यलक्षणम्। पदसंघातजं वाक्यम् इति संग्रहकारेण व्याडिना संग्रहे प्रतिपादितमासीत् किन्तु तल्लौकिकलक्षणं मन्यते। वार्तिककारः कात्यायनः एकतिङ् वाक्यम् (वार्तिकम् १०, पा. २.१.१) इति वार्तिकमुखेन शास्त्रीयं वाक्यलक्षणं प्रस्तौति यस्य पल्लवनं विवेचनञ्च परवर्तिनि काले पतञ्जलि-प्रभृतिभिः कृतं दृश्यते।

उपर्युक्तस्य वार्तिकस्य व्याख्यां प्रस्तुवन् भाष्यकारः पतञ्जलिः कथयति - एकतिङ् वाक्यसंज्ञं भवतीति वक्तव्यम्। आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम्। साव्ययम् इत्येतेन सुष्ठु पचति, दुष्ठु पचति, उच्चैः पठतीत्यादीनां वाक्यत्वं सिद्ध्यति। एवमेव उच्चैः पठति इत्यस्यापि। सकारकम् इति कथनेन ओदनं पचति इत्यस्य तथा सकारकविशेषणम् इत्यनेन मृदु विशदमोदनं पचति इत्यस्य च वाक्यत्वं सिद्ध्यति (महाभाष्यम्, पा. २.१.१ , वार्तिकम् १०)।

अत्र साव्यय-कारक-विशेषणमिति लक्षणानुसारं प्रत्येकं वाक्यं भवति समुदितं वा वाक्यमित्यत्र नियमो नास्ति। यद्यपि अव्ययस्यापि कारकत्वं विशेषणत्वञ्च सिद्ध्यति तथापि तस्य पृथक् प्रतिपादनं स्पष्टार्थमेव। सक्रियाविशेषणञ्च वक्तव्यमिति यत् पतञ्जलिना उक्तं तत्र प्रत्यासत्त्या कारकस्यैव यद् विशेषणं तद् गृह्यते न तु क्रियायाः। आख्यातपदेन च क्रियाप्राधान्यं लक्ष्यते। तेन 'देवदत्तेन पठितव्य'मित्यादौ वाक्यत्वं सिद्ध्यति। सविशेषणमित्यत्र साक्षात्परम्परया वा यद् विशेषणं तत्सहितमित्यर्थः बोध्यः। एवं सति 'नद्यास्तिष्ठ कूले' इत्यादौ नद्याः इत्यादेः समानवाक्यत्वं सिद्ध्यति। एतदेव लक्षीकृत्य अमरकोशे अमरसिंहेन कारकान्वित-क्रियावाचकस्य सुबन्तचयस्य, तिङन्तचयस्य अथवा उभयस्य तथा तयोः अन्यतरस्य वा वाक्यत्वं प्रतिपादितम्। कारकञ्च तिङन्तवाच्यं तदतिरिक्तवाच्यं वेति नास्ति कश्चन आग्रहः।

एतदेव एकोद्देश्यक-एकविधेयत्वगर्भम् एकवाक्यलक्षणं वाक्यपदीयकारेण भर्तृहरिणा अधोलिखितायां वाक्यपदीय-कारिकायां सुष्ठु प्रतिपादितम् -

*साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।*

*क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते।।* इति। (वाक्यपदीयम् २.४)

अत्र कारिकायामुल्लिखितं वर्तते यद् वाक्यपदम् एकवाक्यबोधकम्। अत एव उद्देश्यानेकत्वे विधेयानेकत्वे च वाक्यभेदे सति अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यादिति जैमिनिसूत्रमपि संगच्छते।

वाक्यलक्षणप्रयुक्तम् आख्यातपदमधिकृत्य नागेशकैयटयोः मतानैक्यं वर्तते। कैयटस्तु आख्यातमित्यत्र एकत्वविवक्षणात् पचतिभवतीत्यादौ द्वित्वप्रसङ्गे तिङतिङः इत्यनेन सूत्रेण निघातं न अनुमनुते। उक्तं च तेन प्रदीपे - "आख्यातमिति चैकत्वं विवक्ष्यते लक्षणविधानसामर्थ्यात्। पचतिभवतीत्यादौ सत्यपि साध्य-साधनभावे आख्यातयोर्द्वित्वात् समानवाक्यत्वाभावात् निघातप्रसङ्गात्"। नागेशस्तु उपर्युक्तं कैयटमतं दोषयुक्तं मत्वा तत् खण्डयन् वदति - आख्यातमित्यत्र एकत्वस्य विवक्षणे सति व्यक्तिपक्षे 'न ब्राह्मणं हन्याद्' इत्यादौ एकं ब्राह्मणम् अहत्वा कृती स्यादिति भाष्योक्तन्यायेन एकस्यैव आख्यातस्य वाक्यत्वं स्यात् न तु आख्यातान्तरस्येति। काशिकाकाराभ्यां जयादित्य-वामनाभ्यामपि काशिकायामेकार्थः पदसमूहो वाक्यम् (काशिका, पा. ८.१.८) इति वाक्यलक्षणं प्रस्तुतम्।

### I.2.3.2 : विविधशास्त्रानुमतः वाक्यविभागः

बहुभिः शास्त्रकारैर्यथा वाक्यलक्षणं बहुधा कृतं तथा तैः वाक्यविभागः अपि बहुविध प्रवर्तितः। एते वाक्यभेदाः कस्मिन् सम्प्रदाये केषामाचार्याणां वर्तन्ते इति साम्प्रतं विमृश्यते -

**I. 2.3.2.1 : नैयायिकैः प्रतिपादितः वाक्यविभागः** - नैयायिकैः वाक्यं द्विविधमङ्गीक्रियते - प्रमाणवाक्यम् अप्रमाणवाक्यञ्चेति। तत्र प्रमाणवाक्यं नाम आकाङ्क्षा-योग्यता-सन्निधिमतां पदानां समूहः। यथा गामानय इत्यादि। अप्रमाणवाक्यं यथा - वह्निना सिञ्चति, ह्रदो वह्निमान् इत्यादि। (तर्कसंग्रहः, तर्कभाषा)

तच्च वाक्यं कैश्चिद् अन्यथा अपि विभज्यते। यथा अन्नम्भट्टेन वाक्यं लौकिक-वैदिकत्वेन

द्विविधमित्युक्तम्। ईश्वरोक्तत्वात् वैदिकं सर्वमेव प्रमाणम्, लौकिकञ्चाप्रमाणमिति तस्य युक्तिः। तथा चोक्तं

तर्कसंग्रहे - "वाक्यं द्विविधम्, लौकिकं वैदिकं च, तत्र वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्, अन्यदप्रमाणम् (तर्कसंग्रहः)। तत्र वेदघटकं वाक्यं वैदिकम् (वाक्यवृत्तिः - ४, पृ. २०) इति वाक्यवृत्तिकारः। तस्येश्वरोक्तत्वे प्रमाणमनुमानम्। तच्च वेदः पौरुषेयो वाक्यत्वाद् भारतादिवत्" । (तर्कदीपिका - ४, पृ. ३२ तथा सिद्धान्तचन्द्रोदयः)

शब्दशक्तिप्रकाशिकायां जगदीशेन वाक्यं चतुर्विधं स्वीकृतम्। तच्च यथा सुबन्तं, तिङन्तं, सुबन्तैकसमन्वितम् तथा सुप्तिङन्तद्वयगर्भञ्चेति। शब्दशक्तिप्रकाशिकायाः टीकायामुल्लिखिता अधोलिखिता कारिका एतच्चतुर्विधं वाक्यस्वरूपमेवमुल्लिखति -

*सुबन्तं च तिङन्तं च सुबन्तैकसमन्वितम्।*
*सुप्तिङन्तद्वयगर्भं वाक्यमेवं चतुर्विधम्।।*

(रामरुद्री - कृष्णकान्ती टीका, शब्दशक्तिप्रकाशिका - १३)

तत्रैव वाक्यं पुनरन्यथा द्विधा विभज्यते - महावाक्यम्, अवान्तरवाक्यं (खण्डवाक्यं) चेति। महावाक्यं च स्वघटकानेकनामलभ्यतादृशार्थबोधकं वाक्यम् (स्वोपज्ञवृत्तिः, शब्दशक्तिप्रकाशिका - ३) इति कथ्यते।

नैयायिकैः क्रियारहितमपि वाक्यत्वेन स्वीकृतमस्ति। अतः तेषां मतानुसारं - सुबन्तसमूहः, तिङन्तसमूहः तथा सुबन्त-तिङन्तसमूहश्चेत्येवंप्रकारकं त्रिविधं वाक्यं सम्भवति। यथा 'त्रयः कालाः' इति सुबन्तसमूहात्मकं वाक्यं भवति। एवमेव 'पचति भवति' इति तिङन्तसमूहात्मकं वाक्यं भवति तथा 'चैत्रः पचति' इति सुबन्त-तिङन्तयोः समुदायात्मकं वाक्यं भवति।

**I. 2.3.2.2 :मीमांसकैः प्रतिपादितः वाक्यविभागः** - मीमांसकाः विधिवाक्यं निषेधवाक्यमिति द्विविधं वाक्यमङ्गीकुर्वन्ति। तत्र विधिवाक्यं यथा - स्वर्गकामो यजेत। एवमेव निषेधवाक्यञ्च यथा न कलञ्जं भक्षयेत्। तन्त्रवार्तिके कुमारिलभट्टेन एकवाक्यत्वप्रसङ्गे उक्तम् -

*स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।*
*वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते।।*

तत्र च वाक्यस्य उदाहरणं यथा - दर्शपूर्णमासाभ्यां यजेत ज्योतिष्टोमेन इति तथा महावाक्यं नाम अखण्डार्थबोधकवाक्यमिति।

वाक्यबोधप्रसङ्गे अभिहितान्वयवादः, अन्विताभिधानवादश्चेति मीमांसकानां वादद्वयं प्रसिद्ध्यति। अभिहितान्यवादिनां मते - संघातवादः क्रमवादः इति भर्तृहरिप्रतिपादितं वाक्यवादद्वयं फलितं भवति। एवमेव अन्विताभिधानवादिनां मते च आख्यात-शब्दवादः, आद्यपदवादः पृथक्-साकाङ्क्ष-सर्वपदवादश्चेति वादत्रयं फलितं दृश्यते।

**I. 2.3.2.3 : वेदान्तिभिः प्रतिपादितः वाक्यविभागः** - मायावादिभिः अद्वैतवेदान्तिभिः वाक्यं,

महावाक्यञ्चेति द्विविधं वाक्यं स्वीकृतम्। तत्र च महावाक्यं यथा - प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि, तत्त्वमसि, अयमात्मा ब्रह्म इत्यादि।

**I. 2.3.2.4 : आलङ्कारिकैः प्रतिपादितः वाक्यविभागः** - साहित्य-दर्पणकारस्य विश्वनाथ-कविराजस्य मतानुसारमपि वाक्यं द्विविधं भवति - वाक्यं तथा महावाक्यञ्चेति। साहित्य-दर्पणस्य द्वितीयेऽध्याये तेन प्रतिपादितम् -

*वाक्योच्चयो महावाक्यमित्थं वाक्यं द्विधा मतम्।।* (साहित्यदर्पणः २.१)

तत्र च वाक्यस्य उदाहरणमधोलिखितमुद्धृतं वर्तते -

*शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-*
*र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।*
*विश्रब्धं जातपुलकामालोक्य गण्डस्थलीम्*
*लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता।।*

(साहित्यदर्पणः, प्रथमः परिच्छेदः)

तन्मतानुसारेण महावाक्यञ्च रामायण-महाभारतादि-महाकाव्यानि सन्ति (साहित्यदर्पणः, प्रथमः परिच्छेदः)। एवं सर्वमाहत्य शास्त्रानुमतो वाक्यविभागः अधोलिखितः प्राप्यते यस्य चर्चा उपरि प्रस्तुता -

(i) लौकिकवाक्यम् वैदिकवाक्यञ्चेति वाक्यं द्विविधम्

(ii) प्रमाणवाक्यम् अप्रमाणवाक्यञ्चेति वाक्यं द्विविधम्

(iii) सुबन्तं, तिङन्तं, सुबन्तैकसमन्वितम् तथा सुप्तिङन्तद्वयगर्भञ्चेति वाक्यं चतुर्विधम्

(iv) सुबन्तसमूहः, तिङन्तसमूहः तथा सुबन्त-तिङन्तसमूहश्चेति वाक्यं चतुर्विधम्

(v) महावाक्यम्, अवान्तरवाक्यञ्चेति वाक्यं द्विविधम्

(vi) विधिवाक्यं निषेधवाक्यञ्चेति वाक्यं द्विविधम् तथा

(vii) वाक्यं, महावाक्यञ्चेति वाक्यं द्विविधम् ।

**I. 2.3.3 : वाक्यदोषाः**

वाक्यस्य चत्वारो दोषाः भवन्ति - भ्रमः, प्रमादः, विप्रलिप्सा तथा कर्णपाटवञ्च। एतेषां चतुर्णां दोषाणां लक्षणानि अधोलिखितानि सन्ति - एकपदार्थे अपरपदार्थसंसर्गारोपो भ्रमः, अवाच्ये वाच्यत्वारोपः प्रमादः, अन्यथा ज्ञातस्यार्थस्यान्यथा बोधयितुमिच्छा विप्रलिप्सा तथा शब्दोच्चारणानकूलताल्वादि व्यापारशून्यत्वं कर्णपाटवञ्च। अत्रैतद् ध्यातव्यमस्ति यत् आकाङ्क्षा-योग्यता-सन्निधियुक्तेषु प्रमाणवाक्येषु उपर्युक्ताः दोषाः न भवन्ति इति।

**I. 2.3.4 : भर्तृहरि-प्रतिपादितं वाक्यस्वरूपम्** - वैयाकरणेषु भर्तृहरिः वाक्यानां वर्गीकरणे मुखरो दृश्यते। तेन स्वकीये वाक्यपदीये वाक्यस्य अष्टविधं स्वरूपं यथाशास्त्रं विमृष्टम्। वस्तुतः तेन स्वस्थितिकालपर्यन्तं प्रसिद्धानामुपलब्धानां समेषां वाक्यसिद्धान्तानां संक्षेपः एव प्रस्तुतः। वाक्यपदीये उल्लिखितं वाक्यस्वरूप-प्रतिपादिकं कारिकाद्वयम् अधोलिखितम् अस्ति -

*आख्यातशब्दः संघातो जातिः संघातवर्तिनी।*
*एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः।।*
*पदमाद्यं पृथक् सर्वं पदं साकाङ्क्षमित्यपि।*
*वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्।।*

(वाक्यपदीयम् २.१-२)

अनयोः कारिकयोः निष्कर्षरूपेण प्रतिपादितानामष्टविधवाक्य-स्वरूपाणां विवरणं पुण्यराजेन इत्थं प्रस्तुतम् -

१. आख्यातशब्दः वाक्यम्
२. संघातः वाक्यम्
३. संघातवर्तिनी जातिः वाक्यम्
४. एकोऽनवयवः शब्दः वाक्यम्
५. क्रमः वाक्यम्
६. बुद्ध्यनुसंहृतिः वाक्यम्
७. आद्यपदं वाक्यम् तथा
८. पृथक् सर्वं पदं वाक्यञ्चेति।

एतेषां वाक्यविकल्पानां विशेषप्रतिपत्तये तद्विवरणं प्रस्तूयते -

**I. 2.3.4.1 : आख्यातशब्दः वाक्यम्**

आख्यातशब्दः क्रियापदवाची। तस्मात् क्रिया हि वाक्यमिति तात्पर्यम्। भर्तृहरेः मतानुसारेण वाक्येन स्पष्टार्थप्रतीतिः तदैव सम्भवति यदा वाक्ये क्रिया प्रयुज्यते। तच्च क्रियापदं श्रूयमाणम् अनुमेयं वा इत्यन्यः प्रश्नः, किन्तु वाक्यार्थप्रतीत्यै क्रियासत्ता अनिवार्या एव। उक्तञ्च वाक्यपदीये हरिवृत्तौ : तस्य श्रूयमाणं क्रियापदम् अनुमीयमानं क्रियापदं वा वाक्यमेव सर्वव्यवहारेषूपपद्यते (वाक्यपदीयम् २.४३०)। एकत्व-नित्यत्ववादिनस्तु विशिष्टा क्रिया एव वाक्यमिति प्रतिपादयन्ति। तेषां मते शब्दः एक एव । सा च क्रिया। अर्थोऽप्येक एव सा अपि क्रिया। अपोद्धारेण च व्यवहारार्थमेका एव क्रिया अनेकरूपेण परिकल्पते इति भर्तृहरिणा प्रतिपादितम्। वाक्ये काचित् क्रिया एव नियता भवति। तस्याः प्रयोगेण कर्तुः कर्मणश्च स्वतः भानं भवति। 'देवः जलं वर्षति' इत्यस्मिन् वाक्ये वर्षति इति कथनेन कर्ता, कर्म च स्वतः एवाक्षिप्येते।

आख्यातशब्दः वाक्यम् इत्यस्य अन्यः पक्षः अपि भर्तृहरिणा प्रतिपादितः। एकैव क्रिया आत्मनि कानिचिद् विशिष्टानि पदान्यन्तर्भूय सम्पूर्णं वाक्यं मन्यते। उक्तं हि वाक्यपदीये -

*वाक्यं तदपि मन्येत यत्पदं चरितक्रियम्।*

*अन्तरेण क्रियाशब्दं वाक्यादेव हि दर्शनात्।।* (वाक्यपदीयम् २.३२६)

अस्मिन् विकल्पे प्रयुक्तम् आख्यातपदं कात्यायनस्य "आख्यातं साव्यय-कारक-विशेषणं वाच्यम्" इति वार्तिकाद् गृहीतं स्यात्। यतोहि अव्ययं कारक -विशेषणविशिष्टम् आख्यातमेव वाक्यमिति कात्यायनः। अस्मिन् प्रसङ्गे आख्यातशब्दवादिनस्तु सविशेषणम् इत्येव स्वीकुर्वन्ति। यतोहि आख्यातस्य सम्बन्धेन सत्यवसरे कारकादिविशेषणानि स्वतः एव अध्याह्रीयन्ते।

**I. 2.3.4.2 : संघातः वाक्यम्**

वर्णसंघातजं पदम्, पदसंघातजं वाक्यम् इति प्राचीनावधारणामाश्रित्य एव अयं "संघातः वाक्यम्" इति वादः प्रवर्तते। एकत्ववादानुययिनः 'एकार्थप्रतिपादकः पदसमूहो वाक्यम्' इति स्वीकुर्वन्ति। यथा सर्वाणि साधनानि मिलित्वा पाकक्रियां सम्पादयन्ति, यथा च सेवकाः सम्भूय शिविकामुद्वहन्ति तथैव पदान्यपि मिलित्वैव वाक्यार्थं प्रतिपादयन्ति। उक्तं हि भोजस्य शृङ्गारप्रकाशे - यथा त्रयोऽपि ग्रावाण उखां धारयन्ति, चत्वारोऽप्युद्यन्तारः शिविकामुद्यच्छन्ति, सर्वाणि अपि कारकाणि पाकं साधयन्ति तथा पदान्यपि सर्वाणि वाक्यार्थमन्ववगमयन्ति।

वस्तुतः संघातवादेऽस्मिन् पदानि स्वतन्त्राणि, परतन्त्राणि वा इत्याश्रित्य मीमांसा-दर्शने अभिहितान्वयवादः अन्विताभिधानवादश्चेति वादद्वयं प्रचलितम्। यद्यपि संघातवादोऽयम् अभिहितान्वयवादानुरूपो वर्तते इति पुण्यराजः अभिप्रैति किन्तु कुमारिलभट्टेन तदनुयायिभिः सुचरितमिश्रैश्च आलोचितोऽयं वादः।

भट्टमतानुसारेण परस्परमनुग्रहाद्यभावेन पदसंघातस्य वाक्यत्वं न सम्भवति। उक्तं हि तेन वाक्याधिकरणे श्लोकवार्तिके -

*एवमाद्यन्तं सर्वेषां पृथक् संघातकल्पने।*

*अन्योन्यानुग्रहाभावात् पदानां नास्ति वाक्यता।।* (वाक्याधिकरणम्, श्लोकः - ४)

एतद्व्याख्यानं प्रस्तुवता सुचरितमिश्रेण काशिकाटीकायाम् उक्तम् : पदानां पृथग्भूतानां संघातवर्तिनां वा न वाक्यत्वम्. पृथग्भूतेषु हि तावद् वाक्यबुद्धिरेव नोत्पद्यते। संघातकल्पनेऽपि न पृथक् संघोऽपि विशेषः, तदानीमप्यन्योन्यानुग्रहस्य तेष्वनवगमात्. असति चाग्रहे वाक्यत्वकल्पनामात्रम् एकैकस्यापि तत्प्रसङ्गात्।

व्याकरणनिकाये भर्तृहरिणा संघातवादोऽयं कुत्रचित् समीक्षितः कुत्रचित् समर्थितश्च -

*सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।*

*उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम्।।* (वाक्यपदीयम् २.१५)

किन्तु यथा सावयवाः वर्णाः निरर्थकाः अपि समुदिताः सन्तः सार्थकाः भवन्ति तथैव पदानि समुदितानि वाक्यरूपेण सार्थकानि भवन्ति इति वदता अग्रे पुनः तेन स्वमतमुपस्थापितम् -

*यथा सावयवा वर्णा विना वाक्येन केनचित्।*

*अर्थवन्तः समुदिता वाक्यमप्येवमिष्यते।।* (वाक्यपदीयम् २.५४)

### I. 2.3.4.3 : संघातवर्तिनी जातिः वाक्यम्

अस्मिन् विकल्पे एकः शब्दः वाक्यमित्युच्यते। स च शब्दः जातिनिबन्धनः इति स्वीक्रियते। एवं शब्दजातिरेव वाक्यम् इति तात्पर्यम्। यथा आक्षेपविशेषजनिते भ्रमणे कम्पन-रेचन- उत्प्रेक्षणादि-भेदसम्भवेऽपि तत्र एकैव भ्रमणत्वजातिरभिव्यज्यते तथैव वर्णपदवाक्यान्यपि ध्वनिव्यञ्जितानि भवन्ति। तत्र वर्णापचितध्वनिव्यङ्ग्यसदृशैरन्यैश्च ध्वनिभिः निरवयवं पदं व्यज्यते। प्रचिततमैः तुल्यातुल्यैश्च ध्वनिभिः वाक्यं व्यञ्जितं भवति। उक्तञ्च हरिवृत्तौ - शब्दजातेरेव वाक्यत्वे भ्रमणत्वादयो दृष्टान्तत्वेनोपन्यस्ताः। अपचितध्वनिव्यङ्ग्यस्तावदेको वर्णः। यथा तस्याभिव्यक्ति- निमित्तैः सदृशैरन्यैश्च श्रुतिभिन्नैरेकं निरवयवञ्च पदं व्यज्यते, तथैव तुल्यातुल्यैः प्रचिततमैः वाक्यमिति (हरिवृत्तिः वाक्यपदीयम् २.२१)। पुण्यराजेन अयं शब्दाकृतिवाक्यवादः जातिस्फोटरूपेण स्वीकृतः - तेन भिन्नप्रयत्नोदीरित-ध्वन्यभिव्यक्तोऽयं जातिस्फोटो विलक्षण एवेति बोध्यम् (वाक्यपदीयम् २.२१) इति ।

### I. 2.3.4.4 : एकोऽनवयवः शब्दः वाक्यम् / निरवयवः शब्दः वाक्यम्

एतस्मिन् सिद्धान्ते वाक्यस्य एकत्वं, निरवयवत्वम् अविच्छिन्नत्वञ्च स्वीक्रियते। तत्र अवयवाः काल्पनिकाः भवन्ति। एकमेव चित्रं निरवयवं पूर्णञ्च भवति। आदौ चित्रं परिपूर्णं सद् दृक्पथमायाति, ततश्च भिन्न-भिन्नभागेषु द्रष्टुः दृष्टिः गच्छति। वस्तुतः चित्रस्य स्वरूपज्ञानाय तदवयवेषु दृक्पातः आवश्यकः। एवमेव वाक्यमपि निरवयवं निराकाङ्क्षं च भवति। तस्य ज्ञानाय शब्दानां परस्परं सम्बन्धानुसन्धानपूर्वकं वाक्यं विश्लिष्यते। किन्तु मूल-रूपेण वाक्यं निर्विभागं भवति। तथा चोक्तं भर्तृहरिणा -

*चित्रस्यैकस्वरूपस्य यथा भेदनिदर्शनैः।*

*नीचादिभिः समाख्यानं क्रियते भिन्नलक्षणैः।।*

*तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः।*

*शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते।।*इति।

(हरिवृत्तिः वाक्यपदीयम् २.२१)

पुण्यराजस्तु अक्रमवाक्यं स्फोटरूपेण तथा अनवयवापेक्षं वाक्यञ्च व्यक्तिस्फोटरूपेण स्वीकरोति । उक्तञ्च तेन - परमार्थस्त्वसावक्रम एव स्फोटात्मा प्रतिभासः। उपाधिवशात्तु तत्र बुद्धिः विततेवानुगम्यते इति वोध्यम् (पुण्यराजः, वाक्यपदीयम् २.१३)। वाचस्पतिमिश्रेणापि तत्त्वविन्दौ वाक्यस्य निरवयवत्वं प्रतिपादितम्। तत्र वर्णपदविभागः मिथ्यारूपः इति तस्य अभिप्रायः। तन्मतानुसारेण - अनवयवमेव वाक्यम्। अनाद्यविद्योपदर्शितालीक- वर्णपदविभागमस्याः निमित्तमिति केचित् (प्रमाणवार्तिकम् पृ.६)। परन्तु धर्मकीर्तिना निराकृतोऽयं निरवयववादः। वाक्यस्य निरवयवत्वस्वीकारे तत्र क्रमाभासो न सम्भवति तथा कालभेदोऽपि न सिद्ध्यति। यतोहि एकस्यैव वस्तुनः क्रमेण ज्ञानं न भवति। वाक्य-वर्णपक्षः अङ्गीक्रियते चेत्तर्हि

अपूर्णवाक्यश्रवणेऽपि पूर्णवाक्यज्ञानं स्यात्। एतत् सर्वं प्रमाणवार्तिके इत्थं प्रतिपादितमस्ति - "एकत्वेऽपि ह्यभिन्नस्य क्रमशो गत्यसम्भवात्। कालभेद एव न युज्यते। न ह्येकस्य प्रतिपत्तिः युक्ता। गृहीतीगृहीतयोरभेदा गृहीतीगृहीताभावात्। क्रमेण च वाक्यप्रतिपत्तिः दृष्टा। सर्ववाक्यस्मरण-कालस्यानेकक्षण- निमेषानुक्रमः परिसमाप्तः। वर्णरूपासंस्पर्शनश्चैकबुद्धिप्रतिभासिनः शब्दात्मनोऽप्रतिभासमानात् वर्ण-क्रमप्रतीतेः। तदविशदेऽप्यनुक्रमकृतत्वात् वाक्यभेदस्यानुक्रमवतो वाक्यप्रतीतिः। वर्णानुक्रमोपकारानपेक्षणे तैः यथाकथञ्चित् प्रयुक्तैरपि यत् किञ्चिद् वाक्यं प्रतीयते। विना वा वर्णैः तैः अनुक्रमवद्भिः अक्रमस्योपकारायोगात्। अक्रमेण च व्याहर्तुमशक्यत्वाद् गत्यन्तरभावाच्च। नैव वाक्ये वर्णाः सन्ति। तदेकमेव शब्दरूपं व्यञ्जकानुक्रमवशादनुक्रमवद्वर्णविभागवत् प्रतिभासीति चेत् अनुक्रमवता व्यञ्जकेनाक्रमस्य व्यक्तिप्रयुक्ता व्यक्ताव्यक्तविरोधात्। अवर्णभागे च वाक्येऽसकलश्राविणोऽसकलवाक्यगतिर्न स्यात्। एकस्य सकलाभावात् सकलश्रुतिर्वा न कस्यचित्" (प्रमाणवार्तिकम्, पृ. १२८-१२९)। परन्तु निरवयववादमधिकृत्य प्रस्तुतं धर्मकीर्तेः इमम् आक्षेपं मण्डनमिश्रः खण्डयति स्फोटसिद्धौ। अस्मिन् प्रसङ्गे धर्मकीर्तिना आक्षेपद्वयमुपस्थापितम्। अखण्डवाक्यत्वस्वीकारे वर्णानां क्रमप्रतीतिः न भवति इति प्रथमः आक्षेपः। एवमेव वाक्यस्य एकांशश्रवणे तस्य ज्ञानापत्तिश्चेति द्वितीयः। अनयोः आक्षेपयोः प्रथमाक्षेपस्य खण्डनं कुर्वता मण्डनमिश्रेण उक्तम् - एकत्वेऽपि क्रमशो मतिरनपाख्येयोपाख्येयाकार- प्रलयभेदेन पुरस्तात् प्रपञ्चिता. व्यञ्जकसादृश्यास्तु शब्दान्तरग्रहणाभिमानिनः तेन नाश्रवणं सकलश्रवणं वेति (स्फोटसिद्धिः, पृ. २३८-२३९)। ततः द्वितीयाक्षेपस्य खण्डनं कर्तुं तेनोक्तम् - "तेन कारणेन परमार्थाभावपक्षेऽपि भागशो ग्रहणमुपपद्यते एव, न पुनः अश्रवणं वा सकलश्रवणं वापद्येतेति" (स्फोटसिद्धिः, पृ. २३९)।

### I. 2.3.4.5: क्रमः वाक्यम्

एतन्मतानुसारं क्रमातिरिक्तं वाक्यं नास्ति। ध्वनिसमूहेन पदसमूहेन वा यः अर्थः प्रतिभासते तत्र क्रमः एव कारणं न तु वाक्यम्। अतः अस्मिन् विकल्पे वाक्यस्य सत्ता एव न स्वीक्रियते। शब्देषु च यः क्रमबोधः तत्र कालशक्तेः सन्निवेशः बोध्यः। यतोहि कालशक्तेः भिन्नं क्रमवस्तु नास्ति। उक्तञ्च वाक्यपदीयस्य हरिवृत्तौ - क्रमो हि शब्देषु कालशक्तिरूप-विशेषस्य निवेश एव। सः कालात्मो न व्यतिरिच्यते (वाक्यपदीयम् २.५०)।

पदानां नियतसन्निवेशजन्यो विशेष एव वाक्यमिति चेत् तदा विशेषस्य क्रमजन्यत्वात् क्रम एव वाक्यम्। एतन्मते पदेषु एव अर्थसत्ता मन्यते। वाक्यन्तु प्रलापमात्रम्। उक्तञ्च हरिवृत्तौ - तेन वाक्यमित्यवस्तुकमेणेदमभिलापमात्रं पदमेवार्थवदिति (वाक्यपदीयम् २.५०)।

क्रमवादोऽयं दोषदुष्टः वर्तते इत्यतः अयं पक्षः मीमांसकैः आलोचितः। किन्तु पदानां क्रम एव वाक्यमिति स्वीकारे पदक्रमभेदे वाक्यभेदापत्तिः। यथा - गौः शुक्लः, शुक्लः गौः इत्यनयोः वाक्ययोः पदक्रमभेदात् वाक्यभेदे अर्थभेदापत्तिः। "तेन वाक्यं न भिद्यते (वाक्यपदीयम् २.५०), पदाख्या वाक्यसंज्ञा च शब्दत्वं नेष्यते तयोः" (वाक्यपदीयम् २.५२) चेत्याद्युक्तिभिः क्रमस्य वाक्यत्वं खण्डितं भर्तृहरिणा। वस्तुतः तत्कार्यवाहकत्वात् क्रमः वाक्यमिति उच्यते न तु क्रम एव वाक्यमिति तात्पर्यार्थः।

### I. 2.3.4.6 : बुद्ध्यनुसंहतिः वाक्यम्

अनुक्रमेण संहतिः अनुसंहतिः । कल्पितानां पदबुद्धीनाम् अनुसंहतिः बुद्ध्यनुसंहतिः। बुद्ध्यनुसंहतिः अपि वाक्यं भवति इति षष्ठः वाक्यलक्षणपक्षः। बुद्ध्यनुसंहतिः वाक्यम् इति पक्षे वाक्यम् अखण्डं भवति। तत्र पदानि न सन्ति किन्तु पदानि पदबुद्ध्या कल्पितानि सन्ति। अस्मिन् पक्षे पदसमुदायरूपत्वं बुद्ध्या प्रकल्प्य वाक्यत्व-व्यवहारः स्वीक्रियते। एवं बुद्ध्यनुसंहतिः वाक्यम् इति पक्षे तु बाह्यस्य जातिव्यक्तिस्फोटस्य न वाक्यत्वं किन्तु आभ्यन्तरस्फोटस्य एव। तथा चोक्तं भर्तृहरिणा वाक्यपदीये -

*यदन्तःशब्दतत्त्वं तु नादैरङ्के प्रकाशितम्।*

*तदाहुरपरे शब्दं तस्य वाक्ये तथैकता।।* (वाक्यपदीयम् २.३०)

अर्थात् हृदयान्तः अवस्थितं बोधरूपं शब्दतत्त्वम् एकक्रममपि अतथाभूतैः क्रमवद्भिर्भागैः नादरूपैः प्रकाशितम्। तदेव आचार्यैः पदस्वरूपमिति कथ्यते। यथा तस्य पदस्वरूपस्य शब्दस्य एकता स्वगत-सजातीय-भेदशून्यता तथा वाक्येऽपि योग्यत्वात् तादृशीमेव एकतामाहुः।

### I. 2.3.4.7 : आद्यपदं वाक्यम्

सप्तमेऽस्मिन् वाक्यलक्षणे वाक्यगतम् आद्यपदमेव वाक्यमिति कथ्यते। तथा चोक्तं भर्तृहरिणा -

*केवलेन पदेनार्थो यावानेवाभिधीयते।*

*वाक्यस्थं तावतोऽर्थस्य तदाहुरभिधायकम्।।* (वाक्यपदीयम् २.४१)

उदाहरणार्थं "देवदत्तः गामभ्याज दण्डेन" इत्यस्मिन् वाक्ये देवदत्तपदं वाक्यार्थः भवति। तदुक्तं भर्तृहरिणा वाक्यपदीये -

*विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः।*

*शब्दान्तराभिसम्बन्धाद् व्यज्यते प्रतिपत्तृषु ।।* (वाक्यपदीयम् २.१७)

"देवदत्तः गामभ्याज दण्डेन" इत्यस्मिन् वाक्ये देवदत्तपदं गां वधान इत्यस्माद् विशिष्टमेव भवति। अतः वक्त्रा समुदीरितं चेदपि भ्रमात् सकलसाधारणमिव प्रतिभाति। परवर्तिनि काले गवादिपदसम्बन्धात् विशिष्टा प्रतिपत्तिरभिव्यज्यते। एवं सकलविशेषण-खचितश्च प्रथमतरमेवोपक्रान्तः संसृष्ट एवार्थः वाक्यार्थः भवति इति सिद्ध्यति।

*पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः।*

*संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु।।* (वाक्यपदीयम् २.४११)

अत्र तात्पर्यमेवं वर्तते यद् देवदत्तादिषु उच्चरितेषु पदेषु रूपभेदः अस्ति चेदपि पश्चादुच्चारितं पदं पूर्वानुसन्धानात् विशिष्टं विज्ञायते। एवमत्रापि संसर्गस्य प्रक्रान्तत्वात् प्रथम एव शब्दः षष्ठ्यर्थमुपादाय प्रवृत्तः।

**I. 2.3.4.8 : पृथक् सर्वपदं वाक्यम्**

एतद्विकल्पानुसारं वाक्ये विद्यमानं सर्वम् (आद्यं, मध्यम् अन्त्यञ्च) पदं समुदितं वाक्यं भवति इत्यर्थः। एतद्विकल्पविषये उक्तञ्च भर्तृहरिणा -

*नियतं साधने साध्यम् क्रिया नियतसाधना।*

*स संनिधानमात्रेण नियमः सन् प्रकाशते।* (वाक्यपदीयम् २.४७)

अर्थात् साध्यं साधनञ्च परस्परं नियतमेव। केवलम् आकाङ्क्षावशात् इतरपदार्थसन्निधाने सति नियमः सन्नेव प्रकाशते इति आक्षिप्तपदान्तराणि पदान्येव वाक्यम्। वस्तुतः वाक्ये विद्यमानानि सर्वाणि पदानि प्रत्येकं साकाङ्क्षाणि भवन्ति। यतोहि पदानां परस्पराकाङ्क्षायां समानायां विशेषः अभिधीयते। अर्थात् कारकपदं क्रियायां गुणभूतं सत् पदान्तरम् आकाङ्क्षति। क्रियापदं तु प्रधानभावेन अवस्थितं कारकपदानि अपेक्ष्यते। एवं प्रत्येकं पदम् अपरस्य साकाङ्क्षं भवति।

**I. 2.3.5. वाक्यस्वरूपविमर्शः**

कुमारिलः श्लोकवार्त्तिकस्य वाक्याधिकरणे भर्तृहरिप्रतिपादितम् उपर्युक्तमष्टविधं वाक्यलक्षणमाक्षिपन् वदति -

*"एवमाद्यान्तसर्वेषां पृथक्संघातकल्पने।*

*अन्योन्यानुग्रहाभावात् पदानां नास्ति वाक्यता।।*

*आद्यं यदि पदं सर्वैः संस्क्रियेत विशेषतः।*

*ततस्तदेव वाक्यं स्यात् अन्यश्च द्योतको गणः।।*

*एवमन्त्येषु सर्वेषु पृथग्भूतेष्ववस्थितम्।*

*स्वतन्त्रेषु हि वाक्यत्वं कथञ्चिन्नोपलक्षितम्।।*

*स्फोटजातिनिषेधश्च स्यात् पदस्फोटजातिवत्।*

*वार्यः पदक्रमो वाक्यं यथा वर्णक्रमः पदम्।।*

*बुद्ध्या न चोपसंहर्तुं क्रमो निष्कृष्य शक्यते।*

*पदान्येव हि तद्वन्ति वर्तन्ते श्रोत्रबुद्धिवत्।।*

*तावत्स्वेव पदेष्वन्यः क्रमोऽन्यश्च प्रतीयते।*

*तत्र यावत्क्रमं भेदो वाक्यार्थस्य प्रसज्यते।।"*

(श्लोकवार्त्तिकः, वाक्याधिकरणम्-४९-५४)

पार्थसारथिमिश्रः स्वकीये रत्नाकरे उपर्युक्तानामासां कारिकाणां व्याख्यानावसरे कुमारिलमतं स्पष्टीकरोति - "येऽपि वैयाकरणैरुक्ता वाक्यविकल्पाः "आख्यातं........न्यायदर्शिनाम्' इति तान् निराकरोति एवमिति।

अन्त्यपदवाक्यत्वं परैरनुपन्यस्तमपि सम्भवादुपन्यस्यते, तदनन्तरं हि वाक्यार्थः प्रतीयते। यत्तावत् आद्यस्य अन्त्यस्य सर्वेषां वा प्रत्येकं मिथोऽनुग्रहापेक्षया संघातस्य वा वाक्यत्वकल्पनं तदयुक्तमितरेतरानुग्रहापेक्षया संघातस्य वा वाक्यत्वकल्पनं तदयुक्तमितरेतरानुग्रहासम्भवादिति। अनुग्रहासम्भवमेव दर्शयति - आद्यमिति। न चाद्यस्य इतरैरनुग्रहः कश्चिद् दृश्यते, न सम्भवति अयौगपद्यादिति। तथाऽन्त्यस्य सर्वेषां वा संहतानां पृथग्भूतानां वा नास्त्यनुग्रहः इत्याह एवमिति। मा भूत्तदनुग्रहस्तथापि किमिति वाक्यत्वं न भवति। अत आह स्वतन्त्रेष्विति। एवं च व्यस्तोच्चरितानां गौरश्व इत्यादीनां च वाक्यत्वं स्यादिति। एकोऽनवयवः शब्दः इति च जातिः संघातवर्तिनी इति च निराकरोति स्फोटेति। क्रमो बुद्ध्यनुसंहतिः इत्येतन्निराकरोति वार्य इति। बुद्ध्यनुसंहतिश्च क्रमस्यासिद्धेति आह - बुद्ध्येति। कथमित्याह पदानीति। किं च वर्णक्रमस्य पदत्वं युज्येतापि स हि अर्थप्रतीत्यौपयिकः क्रमान्तरेऽर्थप्रतीत्यभावात्। पदक्रमस्य तु वाक्यार्थप्रत्ययानौपयिकस्य कथं वाक्यत्वम् औपयिकत्वे वा क्रमभेदे वाक्यार्थभेदः स्यादित्याह तावत्स्विति।"(पार्थसारथिमिश्रः, श्लोकवार्त्तिकः, वाक्याधिकरणम्-४९-५४)

### I. 2.3.6: वाक्यस्फोटः

वैयाकरणाः स्फोटात्मकं वाक्यमङ्गीकुर्वन्ति। स्फोटो नाम 'स्फुटत्यनेन अर्थः' इति। 'स्फोटः शब्दो ध्वनिस्तस्य व्यायामादुपजायते' इति वाक्यपदीयकारः अभिप्रैति। अभिव्यक्तवादको मध्यमावस्थ आन्तरः शब्दः इति प्रदीपे कैयटः प्रतिपादयति। स च स्फोटो द्विधा - व्यक्तिस्फोटो जातिस्फोटश्च। व्यक्तिस्फोटः पुनः अखण्डः सखण्डश्च। सखण्डः पुनः वर्ण-पद-वाक्यभेदेन त्रिधा। अखण्डश्च पद-वाक्यभेदेन द्विधा। एवं पञ्च व्यक्तिस्फोटाः।

एवमेव जातिस्फोटश्च वर्ण-पद-वाक्यभेदेन त्रिधा विभक्तः। इत्थमाहत्य अष्टौ स्फोटाः भवन्ति। तत्र अखण्डवाक्यस्फोटः मुख्यः इति नव्याः। वाक्यजातिस्फोटः इति प्राञ्चः। वस्तुतः पद-प्रकृतिः संहिता इति प्रातिशाख्यमतमत्र मानम्। पदानां प्रकृतिरिति षष्ठीतत्पुरुषे अखण्डवाक्यस्फोटपक्षः सिद्धः। बहुव्रीहौ तु सखण्डवाक्यस्फोटः अभिप्रेतः।

भर्तृहरिः वाक्यपदीयस्य वाक्य-काण्डे अखण्ड-वाक्यस्फोटमङ्गीकृत्य वदति -

*पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते*
*पदानां संहिता योनिः संहिता वा पदाश्रया।।*

(वाक्यपदीयम् - २. ५८)

पद-वाक्य-स्फोटयोः मध्ये वाक्यस्फोटस्यैव मुख्यत्वमङ्गीकृतं वैयाकरणैः। अस्मिन् प्रसङ्गे नैयायिक-मीमांसक-शाब्दिकैः स्व-स्व-सिद्धान्त-प्रतिपादक-ग्रन्थेषु महान्तो विचाराः प्रस्तुताः। शब्दः बोधे कारणं भवति। श्रोत्रग्राह्यः गुणः शब्दः इति न्यायमतमनुसृत्य श्रोत्रग्राह्याणां वर्णानामेव शब्दाभिधेयत्वम्। प्रत्येकं वर्णानामनर्थकत्वात् एकैकस्य वर्णस्य तत्र अर्थबोधकारणत्वं वक्तुं न शक्यते। अतः वर्णसंघातस्यैव कारणत्वं वक्तव्यम्। किन्तु उच्चरित-ध्वंसीनां वर्णानां तादृक् संघात एव एकदा श्रोत्रग्राह्यो न भवति। उक्तं च महाभाष्ये - एकैकवर्णवर्तिनी वाक् इति। न द्वौ वर्णौ युगपदुच्चार्येते। गौरिति गकारे यावद्वाग्वर्तते न औकारे, न वा विसर्जनीये। एवमेव

यावदौकारे न गकारे, न विसर्जनीये च। एवं पुनः यावद्विसर्जनीये न गकारे, न औकारे उच्चरितप्रध्वंसित्वात्।

अस्य समाधानरूपेण मीमांसकाः वदन्ति यत् प्रत्येकवर्णानुभवजन्याः संस्काराः एकां स्मृतिमुपजनयन्ति। तस्यां च स्मृतौ सर्वे वर्णाः युगपदेव प्रतिभान्ति इति स्मृति-प्रतिभासितानां वर्णानामेव वाचकत्वम्। उक्तं हि कुमारिलभट्टेन -

*यद्वा प्रत्यक्षतः पूर्वं क्रमजातेषु यत्परम्।*

*समस्तवर्णविज्ञानं तदर्थज्ञानकारणम्।।*

महाभाष्ये पतञ्जलिरपि प्रतिपादयति -

*बुद्धौ कृत्वा सर्वांश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः।*

*शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम्।।*

वस्तुतः क्रमवद्वर्णसमूह एव पदम्, वाक्यञ्च। तस्माद् वर्णा एव पदं वाक्यञ्च। उक्तं च शावरभाष्ये - "अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीयाः इति भगवान् उपवर्षः" इति।

वेदान्तिनोऽपि मीमांसका इव प्रत्येकवर्णानुभव-भावनानिचय- लब्धजन्म-स्मृतिदर्पणारूढानां वर्णानामेव वाचकत्वमङ्गीकुर्वन्ति। उक्तं च ब्रह्मसूत्रस्य शाङ्करभाष्ये - "वृद्धव्यवहारे च इमे वर्णाः क्रमाद्यनुगृहीताः गृहीतार्थविशेषसम्बन्धाश्च सन्तः स्वव्यवहारेऽपि एकैकवर्णग्रहणानन्तरं समस्तवर्णप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानाः तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्ति" इति।

एवमेव नैयायिकाः अपि स्मृतानां तेषां वर्णानां वाचकत्वं मीमांसकाभ्युपगतमङ्गीकुर्वन्ति। उक्तं च जयन्तभट्टेन न्यायमञ्जर्याम् - क्रमोत्पन्नानामपि तेषां संस्कारद्वारा कार्यकरत्वं सम्भवति इति।

वैयाकरणाः तथा पातञ्जलाः योगिनश्च वर्णातिरिक्तं पदमुपपादयन्ति। प्राचीनाः वैयाकरणास्तु वर्णमालायामेकं पदमेकं वाक्यमस्ति इति स्वीकुर्वन्ति। एवं 'तदेवेदं घटपदं ... घटमानय' इति वाक्यमिति प्रत्यभिजानन्ति। एतदनुरोधेन वर्णातिरिक्तस्य कस्यचित् अखण्डस्य पदस्य वाक्यस्य च स्वीकरणमावश्यकमिति ते स्वीकुर्वन्ति।

भर्तृहरिः निरवयवशब्दः वाक्यम् इत्यस्य पक्षपाती वर्तते। तन्मते निरवयवशब्दात्मको वाक्यवाद एवोचितः। वाक्यपदीयस्य टीकाकाराश्चामुमेव पक्षं मनसि निधाय 'सूत्रकारस्याभिप्रायसमाश्रयेण बाह्यरूपः आन्तरो वा निर्विभागः शब्दार्थमयो बोधस्वभावः शब्दः स्फोटलक्षणे एव वाच्यम्' (पुण्यराजः, वाक्यपदीयम् २. ६) इति प्रतिपादितवन्तः। 'निरवयव-वाक्यवादः वाक्यस्यैव निरंशस्य वाचकत्वादन्तरा पदप्रतिपत्तिः विभ्रमः' इति हेलाराजोऽपि प्रतिपादयति (वाक्यपदीयम् ३.१)।

## निष्कर्षः

भाषां विना लोके व्यवहारो न सम्भवति। वाक्यं (सार्थकं पदसमूहं) विना भाषाभिव्यक्तिर्न सम्भवति। अतः न्याय-मीमांसा-व्याकरणादिशास्त्रेषु वाक्यविषयको विचारः दरीदृश्यते। उपरि-वर्णितानां वाक्यलक्षण-विभागादीनामालोके अधोलिखितं वाक्यस्वरूपं निष्कर्षरूपेण समक्षमायाति -

पदसंघातजं वाक्यम्, पदसमूहो वाक्यम्, एकार्थः पदसमूहो वाक्यम्, विशिष्टार्थपरशब्दत्वं वाक्यम्, स्वार्थबोधसमाप्तः पदसमूहः वाक्यम्, समभिहारो वाक्यम्, सुप्तिङन्तचयं वाक्यम्, योग्यताकाङ्क्षासत्तियुक्त पदोच्चयः वाक्यम्, विशिष्टैकार्थ-प्रतिपादक-निराकाङ्क्षपदसमूहो वाक्यम्, एकतिङ् वाक्यम् अथवा एकतिङन्तार्थ-मुख्यविशेष्यक- बोधजनक-पदसमूहो वाक्यं चेति।

- एवमेव आख्यातशब्दः वाक्यम्, संघातः वाक्यम्, संघातवर्तिनी जातिः वाक्यम्, एकोऽनवयवः शब्दः वाक्यम्, क्रमः वाक्यम्, बुद्ध्यनुसंहृतिः वाक्यम्, आद्यपदं वाक्यम् तथा पृथक् सर्वं पदं वाक्यञ्चेति भर्तृहरिसम्मतमन्यदपि अष्टविधं वाक्यलक्षणं सङ्गच्छते।

- एते वाक्यविकल्पाः केषामाचार्याणां वर्तन्ते इत्यस्मिन् विषये मतैक्यं नास्ति। पुण्यराजः एतेष्वष्टविकल्पेषु केषाञ्चन सम्बन्धः मीमांसादर्शनेनापि स्वीकरोति। तन्मतानुसारं संघातवादः क्रमवादश्चेति विकल्पद्वयम् अभिहितान्वयवादिनां मतानुरूपं वर्तते।

- एवमेव आख्यातशब्दवादः, आद्यपदवादः, पृथक्-साकाङ्क्ष-सर्वपदवादश्चेति वाक्यविकल्पत्रयम् अन्विताभिधानवादिनां मतानुरूपमस्ति। तेनोक्तम् यद् "एतेऽष्टौ वाक्यविकल्पा आचार्याणाम्।

- तत्राखण्डपक्षे जातिः संघातवर्तिनी, एकोऽनवयवः शब्दः, बुद्धयनुसंहृतिः इति त्रीणि लक्षणानि।

- खण्डपक्षे तु आख्यातशब्दः, क्रमः, संघातः, पद्माद्यम्, पृथक् सर्वपदं साकाङ्क्षमिति पञ्च लक्षणानि।

- अत्रापि संघातः, क्रमः चेति अभिहितान्वयपक्षे लक्षणद्वयम्। आख्यातशब्दः, पदमाद्यम्, पृथक् सर्वपदं साकाङ्क्षमिति अन्विताभिधानपक्षे लक्षणत्रयमिति विभागः"।

- प्रसिद्धाः मीमांसकाः कुमारिलभट्ट- शालिकनाथ- सुचरितमिश्रादयः वाक्यपदीये चर्चितानामेतेषां वाक्यविकल्पानां सम्बन्धः व्याकरणदर्शनेनैव स्वीकुर्वन्ति।

- तत्तत्शास्त्रेषु उपलब्धेषु उपर्युक्तेषु समेषु वाक्यलक्षणेषु वैयाकरण-निकाये कात्यायनकृतं वाक्यलक्षणम् "आख्यातं साव्ययसकारकविशेषणं वाक्यम् एकतिङ्" (वार्तिकम्, महाभाष्यम् २.१.१) इति सर्वप्रथमं स्वीक्रियते। पतञ्जलिना अपि एतन्मतं समर्थितम्। कात्यायनकृतस्य वाक्यलक्षणस्य कृते तेन अपूर्वशब्दस्य प्रयोगः कृतः - इदमाद्यापूर्वं क्रियते वाक्यसंज्ञा, समानवाक्याधिकारश्च (महाभाष्यम् २.१.१) इति।

- जैमिनिना प्रोक्तं वाक्यलक्षणमपि अतीव प्राचीनं वर्तते। वस्तुतः जैमिनि-कात्यायनकृतयोः वाक्यलक्षणयोः पौर्वापर्यनिर्धारणे काठिन्यं वर्तते।

- महाभाष्यकारेण पतञ्जलिना कात्यायनीय-वाक्यलक्षणस्य कृते आद्यशब्दस्य, अपूर्वशब्दस्य च प्रयोगः कृतः। अतः वैयाकरणानां मतानुसारं कात्यायनकृतमेव वाक्यलक्षणं प्राचीनतरं शास्त्रीयञ्च वर्तते। - पतञ्जलिना प्रयुक्तेन अपूर्वशब्देन ध्वन्यते यत् पूर्वं वाक्यलक्षणं तथा उपलब्धं नासीद् यथा कात्यायनेन वाक्यं परिभाषितम्। एतदेव वाक्यलक्षणम् आधारीकृत्य कात्यायनो वाक्यकारः इति नाम्ना प्रसिद्धः अभवत्। व्याकरणशास्त्रे वाक्यशब्दः वार्तिकशब्दश्च पर्यायरूपेण प्रयुज्यते। वस्तुतः "वार्तिककारीयमेव वाक्यलक्षणं ज्याः" इति कैयटः प्रदीपे प्रकाशयति। तस्य मतानुसारएण जैमिनेः वाक्यपरिभाषा तु लौकिकी अस्ति।

- पक्षान्तरे कात्यायनस्य वाक्यपरिभाषा च शास्त्रीया वर्तते। भर्तृहरि-भोज-विट्ठलाचार्यैरपि कात्यायनेन प्रस्तुतं वाक्य-लक्षणं शास्त्रीयमेव स्वीक्रियते।

- नागेशेन किन्तु तस्य लौकिकत्त्वं लोकशास्त्रोभयसाधारणत्वं वा स्वीकृतं वर्तते।

- लौकिकं वाक्यस्वरूपन्तु कात्यायनात् पूर्वमेव व्याडिना संग्रहे उद्घोषितम्। किन्तु तत् शास्त्रीयं नास्ति।

- जैमिनिना कृतमपि वाक्य-लक्षणं शास्त्रीयं नास्तीति केचित्। मीमांसा-सूत्रस्य प्राचीन-टीकाकारैः जैमिनि-कृतं वाक्य-लक्षणं लौकिकं मन्यते। किन्तु कुमारिलभट्टैः तदनुयायिभिश्च तल्लक्षणं शास्त्रीयमेव मन्यते।

एतानि वाक्यलक्षणानि अधिकृत्य नैकाः शङ्काः सम्भवन्ति। यथा सुप्तिङन्तचयं वाक्यम् इत्यत्र सुबन्त-समुदायः तिङन्त-समुदायश्च सम्मिल्य वाक्यं भवति, अथवा सुबन्ततिङन्तयोः समुदायो वाक्यं भवति, अथवा सुबन्तानां समुदायः तिङन्तानां समुदायश्च स्वतन्त्ररूपेण वाक्यं भवति? एवमेव पदसमूहो वाक्यम् इति लक्षणे च यथा - सार्थक-शब्दानामनर्थक-समुदायोऽपि वाक्यं भविष्यति। यथा 'गौः अश्वः पुरुषः हस्ती' इत्यादि, यत्र शब्दास्तु सार्थकाः सन्ति किन्तु तेषां समुदायः सार्थको नास्ति। एकतिङ् वाक्यमिति पक्षे च 'एकतिङ्' इत्यंशे कर्मधारयं स्वीकृत्य 'एकमेव यत् तिङ् तद् वाक्यमस्ति' इति ज्ञातव्यम् अथवा बहुव्रीहिमङ्गीकृत्य 'एकमस्ति तिङ् यस्मिन् तद् वाक्यमस्ति' इति वा ज्ञातव्यम्।

उपर्युक्तविचाराधारेण निष्कर्षरूपेण एतदुपसंहर्तुं शक्यते यद् वाक्य-स्वरूपविचारप्रसङ्गे पाणिनिप्रभृतयः प्राचीनाः वैयाकरणाः तथा जागरुकाः नासन् यथा तत्परवर्तिनः आचार्याः पतञ्जलि-प्रभृतयः। वस्तुतः कात्यायनादारभ्य एतद्विषयकं विशद-चिन्तनं समुपलभ्यते। ततः पतञ्जलि-भर्तृहरि-कौण्डभट्ट- नागेशादिभिश्च तच्चिन्तनमग्रेसारितम्।

वाक्यस्वरूपादिविषये तु पतञ्जलिरपि तथा मुखरो न दृश्यते यथा भर्तृहरिः। एकतिङन्तार्थमुख्यविशेष्यक-बोधजनकपदसमूहो वाक्यम्' इति वैयाकरणसम्मतं वाक्य-लक्षणं प्रायः सर्वैरङ्गीक्रियते। तत्रापि वार्तिककारीयमेव वाक्यलक्षणं ज्याः इति कैयटः प्रदीपे प्रकाशयति। जैमिनेः वाक्यपरिभाषा तु लौकिकी, कात्यायनस्य वाक्यपरिभाषा च शास्त्रीया इति कैयटस्य अभिमतम्। लौकिकं वाक्यलक्षणं प्रकुर्वता कैयटेन प्रदीपे उक्तम् - अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यादिति। इह तु वाक्यम् आख्यातं साव्ययं कारकं विशेषणम् इति परिभाषितं वर्तते (प्रदीपः, महाभाष्यम्. ८.१.१८)। वस्तुतः भारतीय-परम्परायां कात्यायनः वाक्यकाररूपेण प्रसिद्ध्यति। स्वहर्षचरितटीकायां श्रीशङ्करः लिखति - "वाक्यं विवरणं वार्तिकञ्च, यत्करणात्कात्यायनो वार्तिककारः इत्युच्यते" इति।

**T1 : *अथ किमिदं वाक्यं नाम। एकतिङ् वाक्यमिति भाष्यात्। एकतिङन्तार्थमुख्यविशेष्यक-बोधजनकपदसमूहो वाक्यमिति वैयाकरणाः। तेन पचति भवतीत्यादौ [1] पश्य मृगो धावतीत्यादौ च क्रियापदस्यानेकत्वेऽपि नैकवाक्यताव्याघातः। नहि क्रियाविनिर्मुक्त- वाक्यमस्तीति भाष्यात् 'अस्तिर्भवतिपरः प्रथमपुरुष' इति कात्यायनस्मरणाच्च सर्वत्र समुचितः क्रियापदाध्याहारः।**

---

T1.**'सुप्तिङन्तचयो वाक्यमिति प्रमाणानुसारेण सुबन्तचयत्वे सति तिङन्तचयत्वस्य मिलितस्य प्रत्येकं वा[2] सुबन्तचयत्वादेर्वाक्यलक्षणत्वे परस्परमव्याप्तिः। पदसमूहमित्यस्य गौरश्वः पुरुषो हस्तीत्यादावतिव्याप्तिरित्याशयेन पृच्छति – **अथेति** पदं लोकप्राप्तिसिद्धं वाक्यं वाक्यपदवाच्यं किं जिज्ञासितम्। तथा च लोके प्रसिद्धं[3] वाक्यपदवाच्यं जिज्ञासाविषयीभूतमित्यन्वयबोधः। **नामेति** वाक्यालङ्कारे। **एकतिङ् वाक्यमिति भाष्यादिति**। एकत्वे सति तिङ्त्वं वाक्यत्वमित्युक्ते पचतीत्यस्यापि वाक्यत्वापत्तिः। एकतिङ् यस्मिन्निति बहुव्रीह्याश्रयेण एकतिङ्घटितपदसमुदायत्वे वाक्यत्वमिति पर्यवसन्नं पचति-भवतीत्यादावव्याप्तमित्याशयेन तदर्थमाह – **एकेति**। **तेनेति**। एतादृशार्थकरणेन अन्वयश्चास्य नैकवाक्यताव्याघातः इत्यत्र तन्निषेधे[4] पचति भवतीत्यत्र विक्लित्त्यनुकूलैकाश्रय- वृत्तिभावनाभिन्नैकाश्रयक-भवनानुकूला भावनेति बोधः[5]।'

---

१. घ misses one folio from this place in the base text

२. ग omits वा

३. लोकप्रसिद्धवाक्यपदवाच्यं - ग

४.इत्यत्रेत्यवधेयम् - घ

५. भावना - ग; घ misses one folio from this place in the commentary

* ओं श्रीगणेशाय नमः - क

** ओं श्रीरामचन्द्राय नमः - ग; श्रीभारतीमुख्यप्राणान्तर्गत-
श्रीराघवेन्द्रगुर्वन्तर्गतश्रीलक्ष्मीवेंकटेशाय नमः - घ

**T2.** **न चास्तु क्रियापदाध्याहारस्तथापि बोधविशेष्यत्वं प्रथमान्तार्थस्यैवेति वाच्यम्। 'पश्य मृगो धावती'त्यादावगतेः प्रथमान्तार्थस्य विशेष्यत्वे वाक्यभेदप्रसङ्गात्। मृगस्य दर्शनक्रियायां कर्मतयाऽन्वये मृगपदोत्तरं**

**द्वितीयापत्तेः। द्वितीयायां सत्यां 'लटः शतृशानचावप्रथमासमानाधिकरण' इत्यनुशासनाल्लटः शत्रादेशे 'धावन्तं मृगं पश्ये'त्येवं स्यात्। तथा च 'पश्य मृगो धावति' इति वाक्योच्छेदापत्तेस्तमित्यध्याहारे वाक्यभेदो गौरवञ्च।**

---

T2. पश्य मृगो धावतीत्यत्र मृगाभिन्नैकाश्रयवृत्त्युत्तरदेशसंयोगानुकूलवेग-जन्यविलक्षणव्यापारकर्मकचाक्षुषानुकूलव्यापारस्त्वदभिन्नैकाश्रय-वृत्तिरित्यन्वय- बोधः। नैकवाक्यतेति तिङन्तभेद-प्रयुक्तानेकवाक्यतापत्तिर्नेत्यर्थः। ननु क्रियाविनिर्मुक्तवाक्यस्यापि सत्त्वेन तत्र तल्लक्षणाव्याप्तिरित्याशङ्क्य तद्वाक्य- प्रमाणाविरुद्धत्वेनाव्याप्त्याभावादित्याह – **नहीत्यादिना**। ननु प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादौ तच्छब्देन पुरुष-परामर्शानुरोधात् प्रथमान्तार्थस्यैव बोध (धे) मुख्यविशेष्यत्वस्वीकारेण निरुक्त- लक्षणमप्रयुक्तमित्याशयेन शङ्कते, अस्त्वित्यादिना समाधत्ते – **'पश्य मृग इत्या(दिना)**[1]।

ननु पश्येत्यादौ प्रथमान्तार्थक-मुख्यविशेष्यक बोधस्वीकारेऽपि तमिति पदाध्याहारेण धावनानुकूलकृतिमान् मृगोक्तकर्मकदर्शनाश्रयस्त्वमिति बोधो न स्वीक्रियते येन नानामुख्यविशेष्यताकबोधजनकत्वे न वाक्यभेदः स्यादपि तु धावनानुकूलकृतिमान्मृगनिष्ठकर्मतानिरूपितदर्शनाश्रयस्त्वमित्येव बोधस्तज्जनकतयैकवाक्यत्वक्षतेरभावात्कथमगतिस्तत्रेत्याशङ्क्य मृग- पदार्थस्य दर्शने कर्मतासंबन्धेनान्वयबोधस्य नामार्थस्य धात्वर्थे ऽभेदातिरिक्तसंबन्धेनान्वयबोधस्वीकारे 'तण्डुलः पचती'त्यादिप्रयोग-साधुत्वापत्त्या नामार्थप्रकारकभेदसंसर्गकबोधे विभक्तिजन्योपस्थितेः कारणत्वेनानुपपन्नत्वात् मृगपदार्थस्य कर्मताबोधार्थं मृगपदोत्तरं द्वितीयावश्यकीत्याशयेनाह - **मृगस्येत्यादि**। तत्र फलितमाह – **द्वितीयायाञ्चेत्यादि। धावन्तं मृगं पश्येत्येवं स्यादित्यन्तेन**। ननु तथा प्रयोगो भवत्येवेति न दोष इत्याशङ्क्य 'धावन्तं मृगं पश्ये'त्येवं स्यात्। न तु पश्य मृगो धावतीति प्रयोगस्तथा च तस्योच्छेद एवानिष्टकर इत्याह तथा चेति।

---

1. Here two characters (दिना) are worm-eaten in ग Ms. The text of घ is not available as one folio is missing in between

**T3 . न च वाक्यभेदे क्षतिविरह इति वाच्यम्। तथा सति 'तिङतिङः' (पा. ८.१.२८) सूत्रे अतिङः इत्यस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः, निघातस्वरस्य चैकवाक्यत्वाधीनत्वात्। एकवाक्यत्वाभावे तदनुपपत्तेर्ननु 'हरेर्दशावताराः' इत्यत्र का क्रियाऽध्याहार्या भवन्तीत्येवेति। *परन्तु यत्रायोग्यता न तत्र लडर्थवर्तमानत्वान्वयः। अविवक्षितत्वात् वर्तमान-सामीप्ये वा लट्-सामीप्यं च भूतभविष्यद्रूपम्, अत एव 'जयन्ति कृष्णस्य दशावताराः' इति मुकुटः 'वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नद' इत्यादौ न लडर्थवर्तमानविवक्षेति मिश्रः। वर्तमानार्थक-लट्-प्रत्ययान्तत्वेनेत्यस्यालोकस्य तत्सामीप्यार्थक-लट्- प्रत्ययान्तत्वेनेति कण्टकोद्धारे मधुसूदनठक्कुराः। अत्र नैयायिकाः निष्क्रियस्यापि वाक्यस्य सत्त्वात् त्रिविधं वाक्यं, तथा हि सुबन्तसमूहस्तिङन्तसमूहः सुबन्त-तिङन्तसमूहश्च। यथा 'त्रयः कालाः,' 'पचति भवति' 'चैत्रः पचती'त्यादौ 'धावनकर्तृक-मृगकर्मक- दर्शनाश्रयस्त्वमित्यन्वयबोधात् वाक्यार्थस्य कर्मतासंसर्गेण दर्शनक्रियायां वाक्यस्य चार्थवत्त्वाभावेनाप्रातिपदिकत्वान्न द्वितीयापत्तिः न च वाक्यभेदप्रसङ्गः।**

---

T3. ननु तत्र मृगमुख्यविशेष्यताकत्वं पदार्थमुख्यविशेष्यताकबोध एव स्वीक्रियते तमित्यध्याहारेण तथा च न तस्योच्छेद इत्यत आह तमित्यध्याहार इत्यादिवाक्यभेदे इष्टापत्तिमाशङ्क्य तां परिहरति – **न चेति**। तथा सति वाक्यभेदे सति अतिङन्तात्परं तिङन्तं निहन्यते इति तिङतिङः' (पा. ८.१.२८) इति सूत्रार्थः। न त्वेकवाक्यताभावेऽपि तिङन्तात्परस्यातिङ इति ग्रहणव्यावर्त्यात्वसम्भव इत्याशङ्क्य समानवाक्ये निघात-युष्मदस्मदादेशा वक्तव्या इति वचनेन तिङन्तेन सह तिङन्तस्यैकवाक्यतायामेवातिङ इति ग्रहणाभावे निघात-प्रश(स)क्तिस्तद्वारणाय सूत्रे तद्ग्रहणं सत्येकवाक्यत्वाभावे निघातप्रश(स)क्तिरेव नेत्याह निघात-स्वरस्य चेत्यादि एकवाक्यत्वाभावो तिङन्तेन सह तिङन्तस्यैकवाक्यत्वाभावे तदनुपपत्तेः तिङन्तात्परस्य निघात-प्रश(स)क्त्यनुपपत्तेस्तथा चातिङ इति ग्रहणस्य वैयर्थ्यमिति भावः।

ननु हरेरित्यादाववताराणां भूतभावित्वेन क्रियाध्याहाराभावेन तत्रातल्लक्षणाव्याप्तिरित्याशङ्क्य लडर्थस्य विवक्षितत्वेन भवन्तीत्यध्याहारसम्भव इत्याह – **भवन्तीत्येवेहीत्यादि***। अविवक्षितत्वादित्यन्तेन 'हरिसम्बन्धिदशावताराभिन्नबहुत्वावच्छिन्नाश्रय- वृत्तिभवनानुकूला भावनेति बोधः। लडर्थविवक्षयापि वर्तमानसामीप्ये वर्तमानवद्वेति वचनेन वर्तमानसमीपान्यतरनिष्ठा तादृशी भावनेति बोधः इत्याह – **वर्तमानसामीप्यं वेत्यादि**। अत एव लडर्थाविवक्षणादेव सामीप्यार्थकत्वादेव वा। **जयन्तीति** कृष्णसम्बन्धिदशावताराभिन्न-बहुत्वावच्छिन्नाश्रय-वृत्तिवर्तमानसमीप-निष्ठोत्कर्षानुकूला भावनेति बोधः। अत एवेत्यस्य मिश्रा इत्यनेनाप्यन्वयः। **वारिद इति** [1] वारिदभिन्नैकाश्रयवर्तिनी तृप्तिकर्मक-प्राप्त्यनुकूला भावना वर्तमानकालिकीत्यन्वयबोध

आश्रयणीयः। स च न सम्भवति तद्भावनाया भविष्यत्वात्। इह लोके पानीयदातुस्तृषाशान्तेः स्वयमुदपानेन विनाऽदर्शनात् तृप्तिः पारलौकिकी वक्तव्याऽतो[2] लडर्थो न विवक्षित इति भावः। **अत एवेति** मधुसूदनठक्कुरा इत्यत्राप्यन्वेति[3]। अथ शब्दो निरूप्यते चिन्तामणिपदस्य व्याखानरूपा लोकनायक[4]-पक्षधरमिश्रकर्तृकग्रन्थस्य व्याख्या कण्टकोद्धार इति मधुसूदनकर्तृको ग्रन्थ इति बोध्यम्।

'त्रयः कालाः' इत्यत्र त्रित्वविशिष्टाभिन्नाः काला इत्यन्वयबोधः। पचतिभवतीत्यत्र पाकानुकूलकृतिर्भवनाश्रय इत्यन्वयबोधः चैत्रः पचतीत्यत्र पाकानुकूलकृतिमांश्चैत्र इत्यन्वयबोधः। स्वार्थनिष्ठमुख्यविशेष्यता- निरूपितप्रकारताशालिबोधजनकपदसमभिव्याहृतपदत्वरूपस्य किञ्चित्पदार्थ-निष्ठप्रकारतानिरूपित- स्वार्थनिष्ठ- मुख्यविशेष्यताशालिबोध- जनकतत्पद[5]-समभिव्याहृतपदत्वरूपस्य वाक्यत्वस्य पश्य मृगो धावतीत्यादावपि सत्त्वेन तमिति पदाध्याहाराभावादेकवाक्यत्वक्षतिविरह इत्याह - – **पश्य मृगो धावतीत्यादावपीति**। तस्य एकवाक्यत्वस्य ननु नामार्थप्रकारकभेदसंसर्गकबोधे विभक्तिजन्योपस्थितेः कारणत्वेन कथं धावतो मृगस्य कर्मत्वासम्बन्धेन दृशिक्रियायामन्वयस्तत्र तज्जन्योपस्थितेरभावादतस्तदर्थं द्वितीयापेक्षिता। तथा च तादृशवाक्योच्छेद इत्याशङ्क्य वाक्यस्य प्रातिपदिकत्वाभावे न तदर्थप्रकारकबोधस्य तज्जन्यतावच्छेदकानां क्रान्तत्वान्न द्वितीयापत्तिरित्याह – **वाक्यस्य चार्थवत्त्वाभावेनेत्यादि**। अर्थवत्त्वाभावेन अर्थनिरूपितशक्तिलक्षणान्यतर- सम्बन्धाभावेनेत्यर्थः। तथा च अनुकूलतासम्बन्धावच्छिन्न-धावननिष्ठ- प्रकारता- निरूपित-विशेष्यत्वाभिन्न-समवायसम्बन्धावच्छिन्न-कृतिनिष्ठ-प्रकारतानिरूपित-विशेष्यत्वाभिन्नकर्मतासम्बन्धावच्छिन्न-मृगनिष्ठ-प्रकारतानिरूपित-विशेष्यत्वाभिन्न-निरूपितत्व-सम्बन्धावच्छिन्न-दर्शननिष्ठ-प्रकारतानिरूपित- विशेष्यत्वाभिन्नस्वरूप- सम्बन्धावच्छिन्नाश्रयत्वनिष्ठ-प्रकारतानिरूपितत्वं पदार्थनिष्ठ- मुख्यविशेष्यता- शालिबोधः[6]।

---

* घ is again available from here

1. वारिदस्तृप्तिमिति - ग
2. घ omits अतो
3. इत्यत्राप्यन्वयः - घ
4. लोकनामपक्षधरमिश्र..- घ
5. ग omits तत्
6. ग omits from..ष्यत्वाभिन्नकर्मता.....up to ......मुख्यविशेष्यता- शालिबोधः

**4. किञ्च नहि क्रियाविनिर्मुक्तं वाक्यमस्तीति फणिनो धरणीभारविजृम्भणभणतिरेवेति भावः। तथा हि त्रयः कालाः इत्यादाविव क्रियाविनिर्मुक्तस्य वाक्यस्य सार्वजनीनत्वात् न त्वत्र कापि क्रिया अध्याहर्तुं शक्या। अपि च क्रियाया विशेष्यत्वेऽपि 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादौ तच्छब्देन पुरुष-परामर्शो न स्यात्तस्य विशेषणत्वेनोपस्थिततत्वात् [1]। अन्यथा 'दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इत्यादेरपि साधुत्वापत्तेरित्याद्यनल्पं जल्पन्ति स्म।**

---

T4. ननु क्रियाविनिर्मुक्तवाक्यस्य प्रमाणविरुद्धत्वेन वाक्ये त्रैविध्यमसङ्गतमित्याशङ्क्याह **किञ्चेत्यादि**। क्रियाविनिर्मुक्तं वाक्यमेव दर्शयति - **तथाहीत्यादिना**। सार्वजनीनत्वात् सर्वजनानुभवसिद्धत्वात्। नन्वत्रापि भवन्तीति क्रियाध्याहारः कर्तुं शक्य एवेति चेन्न। भूतभाविकालयोर्वर्तमानभवनाश्रयत्वबाधात्। न च जयन्तीत्यादाविव वर्तमानसामीप्यार्थकत्वं लट् इति वाच्यम्। वर्तमानसामीप्यस्य[2] भूतभविष्यद्रूपस्य भूतभविष्यत्कालसम्बन्धिभवनान्वयेऽपि वर्तमानसम्बन्धिभवने तदन्वयासम्भवात्। न च सामीप्यं वर्तमानसाधारणं निर्वक्तुं शक्यम्। येन वर्तमानसम्बन्धिनोऽपि भवनस्य ग्रहणं स्यात्। न च लटो वर्तमानसामीप्यं वर्तमानत्वं चार्थ इति वाच्यम्। शक्तिलक्षणाभ्यामेकेन शब्देन युगपदनेकार्थाप्रतीतेः। न च गङ्गायां घोषमत्स्यौ स्त इत्यत्र घोषमत्स्यानुरोधे न गङ्गापदेन प्रवाहतीरयोर्वृत्तिद्वयेनोपस्थितिदर्शनाल्लटा वर्तमान-तत्सामीप्ययोस्तथैवोपस्थितिरस्त्विति वाच्यम्[3]। युगपद्वृत्तिद्वयविरोध इति प्राचीनगाथाविरोधादित्येतदभिप्रेत्या – **न ह्यत्रेत्यादि**। ननु लडर्थोऽविवक्षित एवेत्यत आह – **अपि चेत्यादि**। घटोऽयं तज्जातिरित्यादेः प्रामाण्यापत्तिवारणाय सर्वनाम्नां प्रधानोपस्थापकत्वावश्यकत्वम्। तथा च पुरुषाभिन्नैकाश्रयवृत्तिप्रयाणानुकूलो व्यापार इति बोधे पुरुषस्य विशेषणतया भाने न तस्य चरणावित्यत्र तच्छब्देन परामर्शो न स्यादतः प्रथमान्तार्थकमुख्यविशेष्यकबोध एव स्वीकर्तव्य इत्यत आह - **क्रियाविशेष्यत्वे[4] इत्यादिना।**

---

1. विशेषणत्वे चोपस्थिततत्वात् - क
2. वर्तमानसामीप्यार्थस्य - ग
3. .....स्तथैवोपस्थितिवाच्यम् - ग
4. क्रियाया विशेष्यत्वे - ग

**T5. अत्रेदं भावयामः 'पश्य मृगो धावती'त्यत्र तादृशमृगस्य दर्शनक्रियायां कर्मतासंसर्गेणान्वयो न सम्भवति नामार्थ-धात्वर्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा 'तण्डुलः पचती'त्यादेरपि साधुत्वापत्तेः। न च तत्र धावनकृतिविशिष्ट-मृगस्य वाक्यार्थत्वेन नामार्थत्वसम्भवात् नोक्तदोष इति वाच्यम्। तथा सति मृगपदोत्तरं प्रथमाऽपि न [1] स्यात्तस्यापि प्रातिपदिकाश्रयत्वात् ।**

---

T5. अन्यथा सर्वनाम्नां विशेषणोपस्थापकत्वे नामार्थप्रकारकभेदसंसर्गकबोधे विभक्तिजन्योपस्थितेः कारणत्वेन तादृशमृगस्य कर्मतया दर्शनेऽन्वयासम्भव इत्याह — **पश्य मृगो धावतीत्यत्रेत्यादिना** [2]। दृशि-धातु-ज्ञान-जन्य- चाक्षुष- ज्ञानोपस्थिति-सहकृतो यो धात्वाख्यात- प्रातिपदिक-जन्य-गति-विशेषकृति-मृगोपस्थिति-सहकृत-धावति मृग इति वाक्याज्ञान-जन्य-धावनानुकूल-कृतिमान् मृग इत्याकारकबोधस्तत्समूहकृतेन पश्य मृगो धावती'ति वाक्यज्ञानेन कर्मता-सम्बन्धावच्छिन्न-धावन-कृत्यवच्छिन्न-मृगनिष्ठ-प्रकारता-निरूपित- चाक्षुष- ज्ञान- निष्ठ- विशेष्यता-शालिशब्दस्य जननेन मृगादि-पद-जन्योपस्थितिः सहकारिणी। अपि तु तादृशोपस्थिति-सहकृत-धावति मृग इति समभिव्याहारजन्यधावनकर्तृमृगविषयकबोधस्य सहकारित्वमिति तादृशमृगस्य नामजन्योपस्थित्यविषयत्वे न तस्य च कर्मतया धात्वर्थेऽन्वये धात्वर्थनामार्थयोरभेदातिरिक्तसम्बन्धेन बोधोऽनुपपन्न इति नियमभङ्गरूपदोषो नेत्यभिप्रेत्याह — **तत्र धावनेत्यादिना**। तथा सति वाक्यार्थस्य धावनकृतिविशिष्टमृगस्य कर्मतया धात्वर्थेऽन्वये सति प्रथमापीत्यपिना विभक्तिसामान्यप्रतिषेधः। मृगपदोत्तरं कापि विभक्तिर्न स्यादित्यर्थः। तत्र चापादकमप्रातिपादिकत्वादिति पूरणीयं तस्यापीत्यादिग्रन्थानुरोधात्। यद्यपीदमापादानमसङ्गतम्। मृगपदस्य धातुप्रत्ययान्तभिन्नत्वान्मृगत्वावच्छिन्नस्य सत्त्वेनार्थवत्त्वाच्च। अप्रातिपदिकत्वादित्यापादकासिद्धेः। तथापि यादृशवाक्यार्थस्य धात्वर्थेऽन्वयस्तादृश-वाक्योत्तर-विभक्तेर्दर्शनेन दृशि[3] धात्वर्थान्वयिनीलाभिन्न-घट-कर्मत्वार्थक-नीलं [4] घटमिति वाक्योत्तरमिव प्रकृतेऽपि धावनकृतिविशिष्टमृगार्थकमृगपदोत्तरं प्रथमाऽपि न स्यादिति भावः।

---

1. क adds here विवक्षास्थले एव प्रयुक्तस्य 'पश्य मृगो धावती'त्येतस्यैकवाक्यत्वं फणिसंमतं तच्चानुपपन्नमेव। फणिसंमतिस्तु हेलाराजेन स्पष्टीकृता। तथा हि सुबन्तं हि यथानेकतिङन्तस्य विशेषणम्, तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणमिति तेन धावनक्रियाया which appear in next text in other manuscripts, namely, ग and घ

2. पश्य मृगेत्यादिना - घ

3. घ omits धात्वर्थेऽन्वयस्तादृश-वाक्योत्तर-विभक्तेर्दर्शनेन दृशि

४. घ omits घट-कर्मत्वार्थक-नील

**T6.** **किञ्च मृगकर्तृकोत्कटधावनस्य दर्शनक्रियायां कर्मत्वेन विवक्षास्थले एव प्रयुक्तस्य 'पश्य मृगो धावती'त्येतस्यैकवाक्यत्वं फणिसंमतम्। तच्चानुपपन्नमेव। फणिसंमतिस्तु हेलाराजेन स्पष्टीकृता। तथा हि -**

**सुबन्तं हि यथानेकतिङन्तस्य विशेषणम्।**

**तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्।। इति।**

**तेन धावनक्रियाया एव [1] विवक्षायां न प्रतीकार इत्याशयः। अन्यथा 'धावन्तं मृगं पश्ये'त्येवं ब्रूयात्। किञ्च 'त्रयः कालाः' इत्यत्र 'ज्ञायन्ते' इति क्रियान्वयसम्भवात् क्रियाविनिर्मुक्तवाक्यस्यासंगत्यापत्तेः। किञ्च 'शृणु गर्जति मेघो', 'नटो गायति शृणु', 'घटोऽनश्यत्पश्ये'त्यादावव्याप्त्यापत्तेश्च। एतेन प्रथमार्थो मृगकर्मत्वमित्यपास्तम्।**

---

T6. ननु यादृशसामग्रीसत्त्वे यत्कार्यं दृष्टं तदेव तत्रापाद्यम्[2]। नीलं घटं पश्येत्यत्र तादृशसमभिव्याहारज्ञानादेव नीलघटकर्मत्वनिरूपकदर्शनान्वयबोधस्य दृष्टत्वेन नीलं घटमिति वाक्योत्तरं विभक्तिर्मा भूत्पश्य मृगो धावतीति प्रथमान्तपद- समभिव्याहारज्ञानादेव धावनकर्तृमृगकर्मकदर्शनान्वयबोधो भवति। न तु तद्विभक्तिव्यतिरेकत इति प्रथमापि न स्यादिति निर्युक्तिकमित्यत आह - **किञ्चेति**। तच्च एकवाक्यत्वं च अनुपपन्नमेवेति। धावनकर्तृमृगकर्मक- दर्शनाश्रयस्त्वमिति बोधस्वीकारे फणिविवक्षितैकवाक्यत्वानुपपत्तिरिति भावः। ननु मृगकर्तृकोत्कटधावनस्य दृशि-क्रियायामन्वयः। फणितात्पर्यविषय इत्येव कुतोऽवगम्यत इत्याशङ्क्य व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमित्यभिप्रायेण भाष्यार्थस्पष्टीकर्तृहेलाराजसंमतिमाह - **फणिसंमतिस्त्विति**। तेन मृग इति सुबन्तदर्शने विशेषणं न मृगकर्तृकोत्कटधावनं दर्शने विशेषणमिति हेलाराजेन स्पष्टीकरणेन एवकारोत्तरं कर्मतया दृशिक्रियायामन्वयस्येति शेषः। विवक्षायामित्यनन्तरं प्रयुक्तस्य पश्य मृगो धावतीति वाक्यस्येति शेषः। न प्रतिकारः। न निराकरणम्। तथा च तादृशमृगस्य कर्मतया तत्रान्वयस्वीकारे फणिसंमतवाक्यत्वानुपपत्तिरेव दोष इति भावः। ननु प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यमिति नियमात् । धात्वर्थनिष्ठप्रकारतानिरूपित-विशेष्यासम्बन्धेनान्वयबुद्धिं प्रति विशेष्यतया प्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावेन दर्शने प्रत्ययजन्योपस्थितिरभावेन धावनस्य तत्रान्वयो न सम्भवतीति मृगस्यैव तत्रान्वयेन तार्किकपक्ष एव समीचीन इति चेन्न। निरुक्तनियमादेव प्रकृत्यर्थप्रकारकबोधे[3] विशेष्यतया प्रत्ययजन्योपस्थितेः[4] कारणत्वेन कर्मत्वोपस्थित्यर्थं द्वितीयापेक्षा। तथा च पश्य मृगो धावतीति वाक्यो च्छेदापत्तेरित्याह - **अन्यथेति**। कर्मत्वोपस्थित्यर्थं द्वितीयास्वीकारे इति तदर्थस्तथा च सुबन्तस्थल एव तादृशन्यायश्चरितार्थः। तिङन्तस्थले

धात्वर्थविशेष्यकान्वयबोध एव स्वीकरणीय इति। लडर्थविवक्षायामपि भूतभविष्यद्वर्तमानविषयकज्ञाने वर्तमानकालिकत्वान्वयसम्भवेन क्रियाविनिर्मुक्तं वाक्यमसङ्गतमित्याह - **किञ्चेति।** प्रथमान्तार्थक-मुख्यविशेष्यकबोधस्वीकारे दोषान्तरमाह - **किञ्चेति।** शृणु गर्जति मेघ इत्यत्र गर्जनाश्रयमेघकर्मकश्रवणाश्रयस्त्वमिति नैयायिकमते बोधः। स च न सम्भवति शब्दस्यैव श्राव्यत्वेन मेघस्याश्राव्यत्वात्। मेघाभिन्नैकाश्रयवृत्तिगर्जन [5]-कर्मकश्रावणं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः. स च समीचीन एव। नटो गायति श्रृण्वित्यत्र गानाश्रयनटकर्मकश्रावणाश्रयस्त्वमिति तार्किकमते बोधः। स च न सम्भवति नटस्याश्राव्यत्वात्। नटाभिन्नैकाश्रयवृत्ति-गानकर्मकश्रवणं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च यथार्थ एव घटो नश्यत्पश्येत्यत्र चातीतोत्पत्तिकनाशप्रतियोगिघटकर्मक-दर्शनाश्रयस्त्वमिति न्यायमते बोधः। स च न सम्भवति घटस्य नष्टत्वे न तद्दर्शनासम्भवात्। पटाभिन्नैक- प्रतियोगिकातीतोत्पत्तिक-नाशविषयकदर्शनं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च प्रमैव। तथा च न्यायमते तत्र तत्राव्याप्तिरेवेति भावः।

एतेन शृणु गर्जतीत्यादेरयोग्यतापादानेन प्रथमार्थ इति। तथा च पश्य मृगो धावतीत्यत्र प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारेऽपि [6] नामार्थ- धात्वर्थयोरभेदातिरिक्तसंबन्धेनान्वयबोधोऽव्युत्पन्न इति नियमभङ्गो नास्ति। धावनकर्तृमृगनिष्ठप्रथमार्थविषयतानिरूपक- दर्शनाश्रयस्त्वमित्याकारकान्वयबोध-स्वीकारेण कर्मतासम्बन्धेन धावनकर्तृमृगस्य दर्शनक्रियायामनन्वयादिति भावः।

ननु क्रियामुख्यविशेष्यकान्वयवोधस्वीकारे प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादौ तच्छब्देन पुरुष-परामर्शो न स्यात्। प्रथमान्तार्थस्य पुरुषस्याख्यातार्थविशेषणत्वेन मुख्यविशेष्यत्वाभावात्।

---

1. क omits एव
2. तत्रापायम् - ग
3. बोधविशेष्यतया - घ
4. प्रत्ययजन्योपस्थितिः - घ
5. गान for गर्जन - घ
6. स्वीकारेऽपि - ग

**T7. किञ्चैवं मृगे संख्यान्वयो न स्यात्, आख्यातोपस्थाप्य- संख्याप्रकारकान्वयबोधं प्रति मुख्यविशेष्यतया प्रथमान्तपद- जन्योपस्थितेर्हेतुत्वात्। अन्यथा 'हंसीव धवला कीर्ति'रित्यत्र हंस्यामपि संख्यान्वयप्रसङ्गः। मृगे संख्यान्वये इष्टापत्तौ च 'पश्य मृगा धावति' [1] इत्यादेरपि साधुत्वापत्तेः। किञ्च 'पटोलपत्रं पितघ्नं नाडी तस्य कफापहा' इति, 'चैत्रो ग्रामं * गतस्तत्र मैत्रः किं कुरुतेऽधुना' इत्यादिप्रयोगदर्शनात् [2]। 'तच्छब्देन विशेषणस्यापि परामर्शः। परन्तु पदार्थतावच्छेदकरूपविशेषणस्य क्वचिन्न परामर्शस्तेन 'दशैते राजमातङ्गाः' इत्यादौ न काप्यनुपपत्तिरत ** एवोत्सर्गोऽयं न नियमस्तदुक्तं 'सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वमि'ति दिक्।**

---

**T7.** घटोऽयं तज्जातिरित्यादेः प्रामाण्यापत्तिवारणाय तच्छब्दस्याख्यातविशेष्योपस्थापकत्वस्वीकारादतः प्रथमान्तार्थकमुख्य- विशेष्यकबोध एव स्वीकर्तव्य इत्यत आह **किञ्चेति** । एवं धावनकर्तृक-मृगकर्मक-दर्शनाश्रयस्त्वमिति प्रथमान्तार्थमुख्यविशेष्यक- बोधस्वीकारे कुतः संख्यान्वयस्तत्र न स्यादित्यत आह - – **आख्यातोपस्थाप्येत्यादि।**

तत्रायमभिप्रायस्तार्किकमते कृते आख्यातार्थतया कर्तुरनभिधानाद्देवदत्तेन पचतीत्यादिप्रयोगापत्ति-वारणायाख्यातार्थ-भावनान्वय्यन्वयि- संख्यायामनभिहितायामित्यस्य कर्तृकरणयोस्तृतीयेत्यनभिहिताधिकारीय-सूत्रार्थत्वेन स्वीकारेणाख्यातोक्ते कर्तरि [3] कर्मणि च तदुक्तसंख्यान्वय इति वक्तुमशक्यत्वेन विशेष्यतयाख्यातोपस्थाप्यसंख्याप्रकारकान्वयबोधं प्रति प्रथमान्तपद- जन्योपस्थितिरितर-विशेषणत्वतात्पर्याविषयीभूतार्थनिष्ठविशेष्यतालक्षणमुख्यविशेष्यतासम्बन्धेन हेतुरिति स्वीकर्णीयम्। तथा च पश्य मृगो धावतीत्यत्र मृगे इतरविशेषणत्वतात्पर्यविषयीभूतार्थत्वेन निरुक्तसम्बन्धेन तदुपस्थितेरभावान्मृग-संख्यान्वयानुपपत्तिर्दोष इति। ननु वैयाकरणमतेऽपि मृगस्याभेदसम्बन्धेन तिङर्थविशेषणत्वेन तदुपस्थाप्यसंख्यान्वयः कथमिति चेन्न, तन्मते तथा कार्यकारणभावानङ्गीकारात् तन्मते कीदृशकार्यकारणभाव इति चेदित्थं -

*फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।*

*फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।*

इत्यत्र फलं[4] विक्लित्त्यादि-व्यापारस्तु भावनाभिधासाध्यत्वेनाभिधीयमाना क्रिया धात्वर्थं निरूप्य तिङर्थमाह – **आश्रये त्विति**। फलाश्रये व्यापाराश्रये चेत्यर्थः[5]। फलाश्रयः [6]कर्मव्यापाराश्रयः कर्ता तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः। पदार्थं निरूप्य वाक्यार्थं निरूपयति – **फले इत्यादि।** विक्लित्त्यादिफलं प्रति व्यापारः प्रधानं विशेष्यमित्यर्थः। तिङर्थाः कर्तृ-कर्मसंख्याकालास्तत्र कर्ता व्यापारे विशेषणं कर्म तत्फले विशेषणं संख्याकर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मणि विशेषणं कालस्तु व्यापारे

विशेषणं न तु संख्यावत्कर्तृकर्मणोः। अतीतभावनाके कर्तरि पचतीत्यापत्तेः। नापि फले फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेस्तथा चाख्यातोपस्थाप्यसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः।

एवं च[7] चैत्रस्तण्डुलं पचतीत्यत्र चैत्राभिन्नैककर्तृकस्तण्डुलभूत- कर्मनिष्ठविक्लित्त्यनुकूलवर्तमानकालिको व्यापार इति बोधश्चैत्रेण तण्डुलः पच्यते इत्यत्र तण्डुलाभिन्नैककर्मनिष्ठविक्लित्त्यनुकुल-वर्तमानकालिकचैत्रकर्तृको व्यापार इति बोधः। इत्थं च प्रकृते मृगो धावतीत्यत्र मृगाभिन्ने कर्तरि तदुपस्थितेः सत्त्वेन न तत्र संख्यान्वयानुपपत्तिरिति भावः। ननु मुख्येत्यनिवेश्य प्रथमान्तपदजन्योपस्थितेर्हेतुत्वस्वीकारान्न संख्यान्वयानुपपत्तिरित्यत आह अन्यथेति। मुख्यविशेष्यतासम्बन्धेन तादृशोपस्थितेर्हेतुत्वानङ्गीकारे इति तदर्थः। तथा च तार्किकमते तत्र संख्यान्वयानुपपत्तिरेव संख्यानन्वये इष्टापत्तिं वारयति [8] – **मृगे इत्यादिसाधुत्वापत्तिरित्यनेन।**

ननु प्रयाति पुरुषस्तस्येत्यत्र तच्छब्देन पुरुषपरामर्शो न स्यादिति दूषणं तु वर्तत एव इति चेन्न तच्छब्दस्य विशेषणोपस्थापकत्वस्यापि[9] कुत्रचिद्दृष्टं तेन विशेषणीभूतस्यापि पुरुषस्य तच्छब्देन परामर्शसम्भवादित्याह किञ्चेति। ननु तर्हि घटोऽयं तज्जातिरित्यादावपि प्रामाण्यं स्यात्तत्रापि तत्पदेन घटत्वपरामर्शसम्भवादित्यत आह – **परन्त्विति। न परामर्श इति।** पदोपस्थितिप्रकारस्य तत्पदेन परामर्शासम्भवेऽपि तद्भिन्नविशेषणस्य तत्पदेन परामर्शे बाधकाभावादिति भावः।

अन्यथा दशैते इत्यादौ तस्यैवेति तच्छब्देन राजपरामर्शे बाधकाभावे न तत्साधुत्वापत्तेरित्यत्रेष्टापत्तिमाह – **तेनेति।** पदोपस्थितिप्रकारभिन्नस्य विशेषणस्यापि परामर्शसम्भवेनेति तदर्थः। ननु पदार्थतावच्छेदकस्य तत्पदेन परामर्शो नास्तीत्युक्तम्। तर्हि दशैते राजमातङ्गा इत्यत्र राजपदस्य राजसम्बन्धिलाक्षणिकतया राज्ञः पदार्थतावच्छेदकत्वात् तत्पदे तस्य कथं परामर्श इति चेत्तर्हि पटोलपत्रं पितघ्नमित्यत्रापि पटोलपदस्य पटोलसम्बन्धिलाक्षणिकतया पटोलस्य पदार्थतावच्छेदकत्वेन तस्येति तच्छब्देन परामर्शानुपपत्तिः। न च तत्र विग्रह-समासयोः समानार्थकत्वानुरोधेन षष्ठीतत्पुरुषे पूर्वपदलक्षणायाः अस्वीकारेण पटोलपदस्य पटोलमात्रपरतया पदार्थत्वावच्छेदकत्वाभावात् तच्छब्देन परामर्शः सम्भवतीति वाच्यम्। प्रकृतेरपि राजपदस्य राजमात्रपरतया पदार्थत्वावच्छेदकत्वाभावेन तच्छब्देन परामर्शसम्भवात्।

ननु पटोलस्य पत्रमिति विग्रहवाक्यात् पटोलसम्बन्धप्रकारकबोधो ज्ञायते। पटोलस्य पत्रमिति समासात् तत्र लक्षणाऽस्वीकारे पटोल-प्रकारकबोधो [10] जायते। तथा च विग्रहवाक्यसमासवाक्ययोः समानप्रकारकबोधजनकत्वरूप- समानार्थकत्व- भङ्गापत्तिस्तद्वारणाय पटोलपदस्य पटोलसम्बन्धे लक्षणा। एवं च पटोलस्य पदार्थतावच्छेदकत्वेन तस्येति तत्पदेन परामर्शो न स्यात्। न च पटोलसम्बन्धः पत्रमिति वत्पटोलपत्रमित्यादावपि पटोलपदार्थानन्वयापत्तिर्नामार्थयोरिति व्युत्पत्तेरिति वाच्यम्। घटः पटो न, चैत्र इव मैत्रो गच्छतीत्यादौ नञर्थे पटपदार्थस्य प्रतियोगित्वसम्बन्धेन इवार्थे चैत्रपदार्थस्य

स्वनिरूपितत्वसम्बन्धेनान्वयबोधस्वीकारेण निपातातिरिक्तनामार्थस्याभेदातिरिक्तसम्बन्धेन शाब्दबोधोऽव्युत्पन्न इति नियमसङ्कोचवत् समस्तनिपातातिरिक्तनामार्थस्याभेदातिरिक्त- सम्बन्धेनान्वय- बोधोऽव्युत्पन्न इति नियमसङ्कोचस्वीकारात्। न च निपातस्थले व्युत्पत्तिसङ्कोचेऽनुभवो मानम्। समासस्थले व्युत्पत्तिसङ्कोचे मानाभाव इति वाच्यम्। अत्रापि व्युत्पत्तिसङ्कोचे विग्रहसमासयोः समानार्थकत्वप्रवादस्यैव मूलत्वात्। तस्मात् पटोलपदस्य पटोलसम्बन्धे लक्षणास्वीकारेण पटोलपदस्य पदार्थतावच्छेदकतया तस्येति तत्पदेन परामर्शानुपपत्तिर्वर्तत एवेति चेन्न, घटमानयेत्यत्र कर्मतासम्बन्धेनानयनोपरि [11] घटोऽप्यन्वेतीत्येकदेशिमते स्वीकारेण पटोलस्य पत्रमित्यत्र पटोलसम्बन्धप्रकारकबोध इव पटोलप्रकारकपत्रविशेष्यकोऽप्यन्वयबोधो भवति। तथा च विग्रहसमासयोः पटोलप्रकारकपत्रविशेष्यकबोधस्यैव स्वीकारेण पटोलपत्रमित्यादौ पटोलादिपदस्य लक्षणाभावेन पटोलस्य पदार्थतावच्छेदकत्वाभावेन तस्येति तत्पदेन तत्परामर्शानुपपत्तेरभावात्। एवं च 'दशैते राजमातङ्गाः' इत्यादौ तस्यैवेति तत्पदेन राज्ञः पदार्थतावच्छेदकत्वाभावेन परामर्शः सम्भवतीति भावः। अथवा पटोलस्य पत्रं राज्ञो मातङ्गा इत्यादि-व्यासस्थले यथा प्रकृत्यर्थान्वितषष्ठ्यर्थप्रकारकबोधो जायते तथा पटोलपत्रं दशैते [12] राजमातङ्गाः इत्यादावपि लुप्तषष्ठीस्मरणेन पटोलाद्यन्वितसंबन्धप्रकारक-पत्रादिविशेष्यक- बोधस्वीकारेऽपि नामार्थयोरभेदेनैवान्वय इति नियमभङ्गो न।

एवं च पटोलादेः पदार्थतावच्छेदकाभावेन तत्पदेन परामर्शसम्भवः। वस्तुतस्तु नामार्थयोरभेदेनैवेति व्युत्पत्तेः सङ्कोचे मानाभावेन लुप्तषष्ठीस्मरणस्य नैयत्याभावेन च संबन्धिनि लक्षणाया आवश्यकत्वे समानविषयकबोधजनकत्वमित्येव विग्रहसमासयोः समानार्थकत्वं न तु समानप्रकारकबोधजनकत्वरूपं तत्। आरूढवानरो वृक्ष इत्यत्रारुढो वानरो यमिति विग्रहात् यत्कर्मकारोहणकर्ता वानर इति बोधः। समासाच्च वानरकर्तृकारोहणकर्मीभूतो वृक्ष इति बोधः। एवं प्राप्तोदको ग्राम इत्यादावपि तत्र प्राप्तमुदकं यमिति विग्रहात् यत्कर्मकप्राप्तिकर्तृउदकमिति बोधः। समासाच्चोदककर्तृकप्राप्तिकर्मीभूतो ग्राम इत्यन्वयबोधस्तथा च तत्र तत्र भिन्नप्रकारकबोधस्यैवोदयेन व्यभिचारात्।

अथ बहुव्रीहेरविग्रहतया नास्य विग्रहवाक्यत्वम्। चित्रगुरित्यत्र [13] चित्रा गौर्यस्येति हि समासार्थकथनं न तु विग्रहः समस्यमानपदैरेवार्थकथनस्य विग्रहत्वादिति चेन्न। नहि तत्र विग्रह एव नास्तीति समासारम्भकवाक्यस्यैव विग्रहत्वात्।*** किन्तु बहुव्रीहौ तस्यासाधुत्वं समस्यमानपदैरेव विग्रहस्यासाधुत्वात्। अत एव बहुव्रीहौ विग्रहस्यासाधुत्वज्ञापनाय तत्र नित्यसमासत्वाभिधानम्। अत एवाविग्रहोऽस्वपदविग्रहो वाऽनित्यसमास इति तल्लक्षणम्। तत्र समासघटकीभूतपदसमानार्थकपदान्तरेणार्थ-प्रतिपत्त्यनुकूलव्यापारोऽस्वपदविग्रहः।

ननु राजपुरुष इत्यादौ राजपदस्य सम्बन्धिनि लक्षणास्वीकारे विशेषण-विशेष्यवाचकपदार्थयोरभेदेनान्वयबोधेनाभेदे कर्मधारय इत्यनेनाभेदबोधस्थले कर्मधारयविधानात्कर्मधारयापत्तिरिति चेन्न समासपूर्वविशेषण-विशेष्यवाचक-पदयोः समानार्थकयोर्यत्राभेदेनान्वयबोधकत्वं तत्रैव कर्मधारय-विधानात्। एवं च पदार्थतावच्छेदकरूपविशेषणस्य शक्यतावच्छेदकरूपविशेषणस्येत्यर्थः। तेन शक्यतावच्छेदकभिन्नविशेषणस्यापि परामर्शसम्भवेन तथा च राजमातङ्गा इत्यादौ राजपदस्य राजसम्बन्धिनि

लक्षणायां राज्ञः पदार्थतावच्छेदकत्वेऽपि शक्यतावच्छेदकत्वाभावान्न परामर्शानुपपत्तिरिति भावः। न च वैयाकरणमते राजपुरुष इति समुदायस्य राजसम्बन्धिपुरुषे शक्तिरेव। एवं च राज्ञः शक्यतावच्छेदकत्वेन तत्र परामर्शो न स्यादिति वाच्यम्। शक्यतावच्छेदकतात्पर्याप्त्यधिकरणरूपविशेषणस्येत्यस्य तदर्थत्वेन राज्ञस्तथा विशेषणत्वाभावात्तस्यैवेति तत्पदेन परामर्शानुपपत्तेरभावात्।

---

* ख is available from here

** घ breaks from here

1. पश्य धावति मृगा - ग
2. घ omits प्रयोगदर्शनात्
3. ग repeats कर्तरि
4. फले - ग
5. घ omits फलाश्रये व्यापाराश्रये
6. फलाश्रयं - घ
7. चयवन्ति - ग
8. निवारयति - घ
9. विशेषणोपम्यायकत्वस्यापि - ग
10. पटोलस्य प्रकारकबोधो - ग
11. ......नानयोपरि - घ
12. घ omits दशैते
13. ग omits चित्रगुरित्यत्र*** घ breaks from here upto the end

**T8. विवेचित्तं चेदमधस्तादवशिष्टं [1] चोपरिष्टात् स्पष्टीभविष्यति इति श्रीमहामहोपाध्याय- मैथिलश्रीवंशमणेर्विमर्शः। अथोच्यते [2] मृगपदोत्तरं प्रथमाऽपि न स्यादिति धावनक्रियाविशिष्टस्य मृगस्य वाक्यार्थत्वेन नामार्थत्वाभावात्प्रातिपदिकाश्रयीभूता[3] प्रथमाऽपि न स्यादित्यर्थः। तथा च[4] 'मृगो धावती'त्याख्यातोक्तसंख्याके कर्तरि नामार्थे प्रथमा पश्चात् पश्येति क्रियान्तरे वाक्यार्थतयाऽन्वयेऽपि प्राथमिकी प्रातिपदिकसंज्ञा कर्तुं शक्येति को नाम प्रथमां निवारयितुमिष्टे[5]।**

---

T8. अत एव उक्तस्येतत्पदेन विशेषणस्यापि परामर्शादेव उत्सर्गे असति बाधके प्रवर्तमानो विधिः सति बाधके क्वचित्त्यज्यते न नियम इति तच्छब्देन मुख्यस्यैव परामर्श इति नियमो नेत्यर्थः। तत्र सम्मतिमाह - तदुक्तमित्यादिना अवशिष्टविमर्श इत्यन्तो ग्रन्थः स्पष्टः। एवं वैयाकरणमतमुपन्यस्य नैयायिकमतवाक्यार्थस्य दृशिक्रियायां कर्मतयान्वये मृगपदोत्तरं प्रथमापि न स्यादित्युद्भावितदूषणमुद्धर्तुमुपन्यस्यति - मृगपदोत्तरमित्यादि न स्यादित्यर्थ इत्यन्तेन नैयायिकमते कृतेराख्यातार्थतया कर्तुरनभिधानाद्देवदत्तेन पचतीत्यादिप्रयोगापत्तिवारणाय विशेष्यतासम्बन्धेनाख्यातोपस्थाप्य- संख्याप्रकारकान्वयबोधं प्रति प्रथमान्तपदजन्योपस्थितिरितर- विशेषणत्वतात्पर्यान्वयो भूतार्थनिष्ठविशेष्यतासम्बन्धेन हेतुरिति स्वीकरणीयम्। तथा च मृगो धावतीत्यत्र धावनानुकूल-कृतिरूपधावनान्वयि मृगे धावतीत्याख्याताभिहित- संख्यान्वयानुरोधेन प्रथमान्तपदोपस्थाप्यत्वस्यावश्यकतया मृगपदोत्तरं प्रथमा दुर्निवारेत्याशयेनाह – **तत्रोच्यत इत्यादिना।**

---

1. विवेके चित्तं चेदधस्तादवशिष्टं - क
2. क, ग omit अथोच्यते, ख omits मृगपदोत्तरं प्रथमाऽपि न स्यादिति धावनक्रियाविशिष्टस्य मृगस्य वाक्यार्थत्वेन नामार्थत्वात्प्रातिपदिकाश्रयीभूता प्रथमाऽपि न स्यादित्यर्थः। तथा च
3. नामार्थत्वात्प्रातिपदिकाश्रयीभूता - क
4. तत्रोच्यते for तथा च - ग
5. विनाशयितुमिष्ट इति - क ; विनाशयितुमिष्टे - ख

**T9 . यत्तु मृगकर्तृकोत्कटधावनस्यैव दृशिक्रियायां कर्मतयान्वयः[1] विवक्षित इति भाष्यकृदाशयवर्णनम्। यदपि 'सुबन्तं हि यथानेकं तिङन्तस्य [2] विशेषणं तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषण'मिति हेलाराजसंमतिप्रदर्शनं तदुभयं न विचारचारु प्रकृति-प्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यमिति [3] नियमाद्धात्वर्थनिष्ठ-प्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतया प्रत्यय-[4] जन्योपस्थितिर्हेतुरिति कार्यकारणभावादेक[5]- धात्वर्थप्रकारकापरधात्वर्थ- विशेष्यकान्वयबोध एव न सम्भवति। न चैवं '[6]भावप्रधानमाख्यातम् सत्त्वप्रधानानि नामानी'ति यास्कमुनिविशेष- वचसाख्यातस्थले प्रत्ययार्थप्राधान्यं त्यजेत् इति वाच्यमाख्यातपदं तिङन्तेष्वेव रूढं [7] न तु तिङन्तेषु इति आख्यातार्थेषु संख्यावर्तमानत्वादिषु भावस्यैव संख्याकालातिरिक्ताख्यातार्थस्यैव प्राधान्यमस्तीति [8] नियमात्।**

---

**T9.** यास्कप्रथमाऽनुपपत्तिरुदाहृत- भाष्यकाराशयविरोधो हेलाराजसंमतिविरोधश्च दुष्परिसर इत्यत आह — **यत्त्विति**। ननु प्रकृति-प्रत्ययौ सहार्थं ब्रूत इत्ययं न्यायः - सुबन्तस्थल-यव-तण्डुलमित्यादौ द्वितीयार्थकर्मत्वे प्रकृत्यर्थ-तण्डुलप्रकारकान्वय- बोधस्य विशेषता-सम्बन्धे तोतपादस्त्वत्र प्रत्ययभूत-द्वितीयाजन्योपस्थितेः सत्त्वाच्चरितार्थ इति तिङन्तस्थले धात्वर्थविशेष्यकान्वयबोध एव स्वीकरणीयः। भावप्रधानमाख्यातमिति धात्वर्थभावना-मुख्यविशेष्यकान्वयबाधतात्पर्यकयास्कमुनिवचनानुरोधादित्याशयेनाह — **न चेत्यादि**। भावप्रधानमाख्यातमित्यत्राख्यातपदं न तिङन्ते रूढम्। शास्त्रकारैस्तत्राप्रयोगात्प्रयोगे वा तत्र गौणत्वात् तिङ्क्ष्वेव शास्त्रकाराणां प्रसिद्धप्रयोगदर्शनात्। धात्वर्थभावनामुख्य-विशेष्यकान्वयबोध-जनकमाख्यातान्तमिति वचनं भ्रान्तप्रलपितमिति मन्वानः सिद्धान्ती भावप्रधानमाख्यातमित्यस्य संख्याकालातिरिक्ताख्यातार्थस्यैव भावनया तादृशार्थ - विशेष्यकान्वयबोधे प्रत्याख्यानं कारणमित्येवंविध-कार्यकारणभावपरत्वात् प्रकृति-प्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमित्यस्य प्रत्ययार्थविशेष्यकशाब्दबोधं प्रति प्रत्ययः कारणमित्येवंविधकार्यकारणभावपरतया यास्कवचनगतस्याख्यातपदस्य तिङ्-सुप्-साधारणरूपेण प्रत्ययत्वेन पर्यवसानमेव युक्तम्। तण्डुलं पचतीत्यादौ द्वितीयार्थकर्मत्वविशेष्यकबोधस्य प्रत्ययार्थभावनाविशेष्यकबोधस्य च दर्शनादित्याशयवानाह — **आख्यातपदमिति**।

---

1. कर्तर्यन्वयः - क
2. सुबन्तस्य - क
3. प्रत्ययार्थप्राधान्यमिति - क, ख

4. जन्यतोपस्थिति... ख

5. क, ग omit एक

6. सामर्थ्ये सति सत्त्वप्रधानानि न प्रतिभाति - ख in place of भावप्रधानमाख्यातम् सत्त्वप्रधानानि नामानी'ति

7. निरूढं - ख

8. प्राधान्यमिति - ख

**T10. वस्तुतस्तु प्रथमान्तार्थ-प्राधान्येऽपि मृगकर्तृकोत्कटधावनस्य कर्मता-संबन्धेन 'दृशि' क्रियायां विशेषणतयान्वयो न विरुध्यते यतो हि विशेष्यान्वयिनान्वयित्वमत्र विशेषणत्वं धावनक्रियाया विशेष्यो [1] मृगस्तदन्वयिनी दर्शनक्रिया तदन्वयित्वरूपं विशेषणं धावनक्रियाया अक्षतमिति न भाष्यकृदुक्तिविरोधो, न वा हेलाराजोक्तिविरोध इति तत्त्वम्। स्पष्टं चेदं मीमांसायां 'सोष्णीषा ऋत्विजः प्रचरन्ति, लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यादौ। तथा हि पूर्ववाक्ये उष्णीषाणामपीष्टसाधनत्वे विशेषणतयान्वयः। तत्र विशेषणत्वं विशेष्यान्वयिनान्वयित्वमेव। उष्णीषाणां विशेष्या ऋत्विजस्तदन्वयीष्टसाधनत्वम्। 'तदन्वयित्वमुष्णीषाणा'मिति उत्तर-वाक्ये तु [2] पूर्वलब्धस्योष्णीषविशिष्टर्त्विक् [3]-कर्तृकप्रचरणस्य नेष्टसाधनत्वेऽन्वयः किन्तु लौहित्यमात्रस्य तत्रापि परम्परयोष्णीषद्वारा ऋत्विक् रूपविशेष्यान्वयिनेष्टसाधनत्वेन लौहित्यान्वयस्वीकारात् [4] इति।**

---

T10. नन्वेवमप्युत्कटधावनस्यैव दृशिक्रियायां कर्मत्वं फणितातत्पर्यविषयिभूतमिति तन्मतविरोध इत्यत आह – **वस्तुतस्त्विति**। नन्वेवं विशेष्यान्वयिनान्वयित्वरूपं विशेषणत्वं भाष्यसम्मतमपि तूत्कट-धावनस्य एतादृशं न क्रियायां विशेषणत्वमित्याशङ्क्य तादृशविशेषणत्वस्यापि तान्त्रिकैस्स्वीकारादित्याशयेन तान्त्रिकसम्मतिमाह – **स्पष्टं चेदमिति**। पार्थसारथिमिश्रमते विध्यर्थस्येष्टसाधनत्वरूपत्वाद्यज्ञेनेत्यादिस्थले याग इष्टसाधनमित्यन्वय- बोधस्वीकारेण दध्ना जुहोतीत्यत्र गुणविधौ दधीष्टसाधनमित्यन्वयबोधो तथा च प्रकृते सोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र प्रचरणाङ्गभूताः सोष्णीषा ऋत्विज इष्टसाधनमित्यन्वयबोधस्वीकारेण उष्णीषविशिष्टर्तिजामिष्टसाधनत्वान्वये उष्णीषस्यापीष्टसाधनतान्वयः।

एवं लोहितोष्णीषा इत्यत्रापि प्रचरणाङ्गभूता लोहितोष्णीषविशिष्टर्त्विज इष्टसाधनमित्यन्वय बोधस्वीकारे लौहित्यविशिष्टोष्णीषस्य ऋत्विग्द्वारेष्टसाधनत्वान्वये लौहित्यस्यापीष्ट- साधनत्वान्वय इत्यङ्गीकारस्तथा च प्रकृतेऽपि धावनविशिष्ट मृगस्य दृशिक्रियाकर्मत्वे धावनस्यापि दृशिक्रियाकर्मत्वं भाष्यसम्तमक्षतमेवेति भावः। भट्टमतेऽपि सोमेन यजेतेत्यत्र सोमवता यागेनेष्टं भावयेदिति वाक्यार्थस्वीकारे सोमविशिष्टयागस्य भावनायां करणत्वेनान्वये यागद्वारा सोमस्यापि करणत्वेनान्वये बाधकाभावेन विशेष्यान्वय्यन्वयित्वरूपं विशेषणत्वं एषामपीष्टमेवेत्युदाहृतस्थलद्वये सोष्णीषैः ऋत्विग्भिः प्रचरणं भावयेत् लोहितोष्णीषैः ऋत्विग्भिः प्रचरणं भावयेदित्यन्वयबोधस्वीकारेण विशेषणीभूतोष्णीषस्य ऋत्विग्द्वारा लौहित्यस्य चोष्णीषद्वाराभावनाकरणत्वस्येष्टत्वेन विशेष्यान्वय्यन्वयित्वरूपं विशेषणत्वमव्याहतमिति धावनस्यापि मृगद्वारा दृशिक्रियायां कर्मतासम्बन्धेनान्वयित्वमव्याहतमिति न विरोधः।

न च भट्टमते सोमेन यजेतेत्यादौ यागस्यैव करणत्वं न तु सोमस्यापि। अन्यथा यागस्य

सोमवत्त्वं सोमेन यजेतेति वाक्यान्तरं विना नोपपद्यत इत्यर्थाक्षिप्तवाक्येन सोमेन यागं भावयेदित्यन्वयबोधस्वीकारोऽनुपपन्नः स्यादिति वाच्यम्। 'विधाने वानुवादे वा यागः करणमिष्यते' इति वार्तिकेन दध्ना जुहोतीत्यादिस्थलेऽपि गुणविधौ दधिमता होमेनेष्टं भावयेदिति वाक्यार्थबोधस्वीकारस्तथा चात्रापि दधिमत्त्वं होमे दध्ना जुहोतीति वाक्यान्तरमन्तरेण भावनायां करणत्वेनान्वये विशेषणस्यापि करणत्वेनान्वय इत्यङ्गीकारस्यैव युक्तत्वात् वाक्यान्तरकल्पने गौरवाच्चेति विशेष्यान्वयित्वरूपं विशेषणत्वं मीमांसायां स्पष्टमित्यभिप्रेत्य विशेष्यान्वय्यन्वयित्वरूपं विशेषणत्वमाह – **तथाहीत्यादिस्वीकारादित्यन्तेन**। तत्रापि इतरवाक्येऽपि परम्परया स्वाश्रयाश्रयत्वसम्बन्धेन स्वविशेष्यः ऋत्विक्पदार्थः तदन्वयिना इष्टसाधनत्वेनान्वय इति फलितम्।

---

1. धावनक्रियाविशेष्यो - ख
2. उत्तर-वाक्यात् - क, ख
3. पूर्वस्य लब्धोष्णीषविशिष्टर्त्विक् - ग
4. लौहित्यस्यान्वयस्वीकारात् - क, ग

**T11. यत्तु 'धावन्तं मृगं पश्ये'त्येवं कुर्यादिति तन्न, पर्यायशब्दानां प्रयोगे वक्तुरिच्छाया एव नियामकत्वेनेष्टापत्तेः। सर्वथा तात्पर्याभावे [1] 'मृग'पदं नोच्चारयेत्। किन्तु 'पश्य धावती'त्येवं रूपादिति न काऽप्यनुपपत्तिः[2]। यत्तु 'त्रयः कालाः' इत्यत्र 'ज्ञायन्ते' इति क्रियाध्याहारसम्भवात् [3] क्रियाविनिर्मुक्त-[4] वाक्योदाहरणस्यासङ्गत्यापत्तेरिति तत्र ज्ञानक्रियानाकाङ्क्षयोः 'कति कालास्त्रयः काला' इति प्रश्नोत्तरवाक्ययोः क्रियाविनिर्मुक्तत्वसम्भवादिति।**

---

**T11.** ननु धावनकर्तृमृगस्य दृशिक्रियायां कर्मत्वेनान्वये पश्य मृगो धावतीति न ब्रूयात् 'धावन्तं मृगं पश्ये'त्येवं ब्रूयादित्याशयेनाक्षिपति यत्त्विति। नीलं घटं पश्य, नीलघटं पश्येति व्यास-समासयोः प्रयोगो वक्तृतात्पर्यस्यैव नियामकताया इष्टत्वात् पश्य मृगो धावति 'धावन्तं मृगं पश्येति प्रयोगद्वैविध्येऽपि वाक्यार्थभेदस्य नियामकताभावेन वक्तुरिच्छाया एव समाधानं करोति तन्न, पर्यायेत्यादिना सति वक्तुस्तात्पर्ये धावन्तं मृगं पश्येत्यत्रापि प्रयोगे इष्टापत्तेर्न पश्य मृगो धावतीत्यस्य हानिर्न ह्यभेदार्थकपर्यायाणां मध्ये एकप्रयोगे सत्यपरप्रयोगः केनचिन्निषेद्धुं शक्यत इति भावः।

ननु 'धावन्तं मृगं पश्य पश्य मृगो धावतीत्यनयोरेकत्र मृगान्वितकर्मत्वस्यापरत्र कर्मत्वसम्बन्धेन मृगस्य दर्शनक्रियायामन्वयविवक्षेत्यर्थभेदोऽस्त्येवेति धावनक्रियायाः कर्मत्वेन दृशिक्रियायामन्वयविवक्षायां पश्य मृगो धावतीत्येव प्रयोगः कर्तव्य इत्यत आह सर्वथेति। न काऽप्यनुपपत्तिरिति धावनविशिष्टमृगस्य कर्मत्वेनान्वये भाष्यकारादिविवक्षाविरोधो धावतीत्यत्र शत्रापत्तिर्मृगपदोत्तरं द्वितीयापत्तिरित्येव पाद्यनुपपत्तिः कापि न स्यादिति भावः।

नत्वेकतिङन्तार्थमुख्यविशेष्यक- बोधजनक-पदसमुदायत्वं वाक्यत्वमित्यत्र तार्किकैस्तिङन्तसमूहः सुबन्तसमूहः इत्यादिवाक्यं त्रिधा विभज्य त्रयः कालाः' इत्यादिक्रमेणोदाहृत्य त्रयः कालाः इत्यत्र तिङन्तपदाभावेनाव्याप्तावभिहितायां ज्ञायन्त इति पदाध्याहारेण त्रित्वविशिष्टाभिन्नकालाभिन्नाविषयाश्रय-वृत्तिज्ञानमित्यन्वयबोधस्वीकारेण वैयाकरणोक्त-वाक्यलक्षणस्यान्तर्दुष्टत्वात् पश्य मृगो धावतीत्यत्रापि क्रियायाः कर्मतया दृशिक्रियायामन्वयेऽपि बाधकाभाव इत्याशङ्कां समाधातुमनुवदति – **यत्त्विति**। 'त्रयः कालाः ज्ञायन्ते' इत्यत्र तदुक्तलक्षणस्याव्याप्त्यभावेऽपि कति काला इति प्रश्ने त्रयः कालाः इत्युत्तरं दृश्यते। तत्र क्रियाध्याहारे प्रयोजनाभावात्तल्लक्षणमव्याप्तमित्याशयेनाह – **तन्नेति**। **क्रियाविनिर्मुक्तत्वसम्भवादिति**।

न च कति कालाः, त्रयः कालाः इति प्रश्नोत्तरवाक्ययोरपि भवन्ति, ज्ञायन्त इति पदाध्याहारसम्भवान्नोक्त-

लक्षणमव्याप्तमिति वाच्यम्। कति कालाः इति कालत्वव्याप्यप्रकार- विशेष- जिज्ञासया प्रश्नस्य करणे तज्जिज्ञासानिवर्तनाय प्रकारविशेषज्ञानजनकोत्तर- वाक्यस्यैवाकांक्षितत्वेनानाकांक्षित-क्रियाध्याहारस्यानुचितत्वादिति भावः।

---

1. सर्वस्मात्तात्पर्याभावे - क, ख
2. काऽप्यनुपपत्तिरिति - ख
3. क्रियान्वयसम्भवात् - ख, ग
4. वाक्यस्योदाहरणस्यासंगत्यापत्तेरिति - क, ग

**T12. यत्तु 'शृणु गर्जति मेघो', 'नटो गायति शृणु', 'घटोऽनश्यत् पश्ये'त्यादावगतेश्चेति तन्न सविशेषणे हि विधि-निषेधौ सति विशेष्ये बाधे[1] विशेषणमुपक्रामत [2] इति विशेषणेषु गर्जन-गानाभावेषु श्रवणदर्शनान्वयसम्भवादिति।**

---

**T12.** ननु क्रियामुख्यविशेष्यकान्वयबोधमनङ्गीकृत्य प्रथमान्तार्थमुख्यविशेष्यक- बोधस्वीकारे 'शृणु गर्जति मेघो', 'नटो गायति शृणु', 'घटोऽनश्यत् पश्ये'त्यादौ गर्जनाश्रयमेघस्य गानकर्तृनटस्य श्रावणकर्मत्वासम्भवात् वर्तमाननाशप्रतियोग्युत्पत्तिकनाशप्रतियोगिघटस्य दृश्यर्थकर्मत्वासम्भवाच्च क्रियामुख्यविशेष्यकान्वयबोध एव स्वीकर्तव्य इतीमामाशङ्कां समाधातुमनुवदति – **यत्तु शृण्विति**। सविशेषणे हि विधि-निषेधौ प्रवर्तमानाविति न्यायेन गर्जनस्य गानस्य नाशस्य च शृदृश्यर्थत्वाद्यसम्भवेन न काप्यनुपपत्तिरित्यत आह – **तन्न सविशेषणे हीत्यादिना**। न च सविशेषणे हीति न्यायमाश्रित्य समाधानं न सम्भवति तादृशन्याये प्रमाणाभावादिति वाच्यम्। स्वर्गो ध्वस्तः, शिखी ध्वस्त इत्यादिप्रयोगदर्शनात् ध्वस्त इत्यत्र क्तप्रत्ययार्थध्वंसप्रतियोगिनः शिखिनः स्वर्गिणश्चाविनाशेन तत्रान्वयासम्भवेन शिखास्वर्गयोस्तदन्वयस्वीकारात् ।

न च ध्वंसप्रतियोगिनः प्रथमान्तार्थस्य शिखायां स्वर्गे चापदार्थे कथमन्वयः यत्किञ्चित्पदार्थनिष्ठप्रकारतानिरूपित- विशेष्यता- सम्बन्धेनान्वयबोधं प्रति पदजन्यपदार्थोपस्थितिर्मुख्य-विशेष्यतासम्बन्धेन कारणमित्येतादृशार्थकपदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायादिति वाच्यम्। एकदेशन्यायस्यापि क्वचिद् दृष्टत्वात्। ननु क्व दृष्ट इति चेच्छरैः शातितपत्रश्चैत्रस्य गुरुकुलमित्यादौ तद्दर्शनात्। ननु घटो नित्यः पशुरपशुरित्यादावपि नित्यत्वाश्रयघटत्ववान् पशुभिन्नपशुत्ववानित्याद्यन्वयबोधे बाधकाभावेन तेषामपि प्रामाण्यं स्यादिति चेन्न। शरैरित्यादेः साकाङ्क्षत्वात् एकदेशान्वयसम्भवेऽपि घटो नित्य इत्यादेर्नित्यसाकाङ्क्षत्वाभावेनाप्रामाण्यात्। ननु स्वर्गो ध्वस्त इत्यादौ नित्यसाकाङ्क्षताभावात् कथमेकदेशान्वय इति चेन्न, अन्वयबोधस्य तात्पर्याधीनत्वेन प्रकृते एकदेशान्वयतात्पर्यस्य प्रामाण्यान्यथानुपपत्त्या स्वीकारात्।

न च घटो नित्य इत्यादेरपि तात्पर्यसद्भावे एकदेशान्वयसम्भवे प्रामाण्यापत्तिरिति वाच्यम्। सति तात्पर्ये इष्टत्वात्। अत एव हि यत्र पदार्थेऽन्वयसम्भवस्तत्र भावप्रधाननिर्देशपरतयापि निर्वाहोऽयमिति ग्रन्थकृतां सङ्गच्छते। सर्वतो बलवतीत्यन्यथा उपपत्तिरिति न्यायात् । न च शिखी ध्वस्त इत्यादौ शिख्यादिपदस्य शिखामात्रलाक्षणिकत्वेन शिखाध्वंसप्रतियोग्यभिन्न इत्यन्वयबोधस्वीकारे शिखी ध्वस्तो स्वर्गो ध्वस्त इत्यादिवाचकशब्दप्रयोगस्यैव स्वायते शब्दप्रयोगे किं नित्यवाचकं प्रयुञ्ज्महे इति न्यायेन सम्भव इति वाच्यम्। लाक्षणिकमात्रस्यैव विलयप्रसङ्गात्।

न च लाक्षणिकं द्विविधम् - निरूढं प्रयोजनवच्च। निरूढं कुशलादि, प्रयोजनवद्गङ्गायां घोष

इत्यादि। तत्र स्वर्गो ध्वस्त इत्यादिकं न प्रयोजनवत्प्रयोजनस्य शैत्यपावनत्वादिप्रतीतेरिवात्र प्रयोजनप्रतीतेरभावात् नापि निरूढमत्तात्पर्यकल्पनागौरवापत्तेरिति वाच्यम्। स्वर्गो ध्वस्त इत्यादिप्रामाणिकप्रयोगदर्शनं नानादितात्पर्यकल्पनायाः प्रामाणिकत्वेन गौरवस्यादोषत्वात्।

ननु शिखादिपदस्य शिखामात्रलक्षणास्वीकारे तत्पदजन्यपदार्थोपस्थितिमुख्यविशेष्यत्वेन शिखाया विशेषणत्वाभावात् सविशेषणे हीति न्यायानुसरणोदाहरणत्वं तत्र न सङ्गतमिति शिख्यादिपदस्य शिखाविशिष्टधर्मिबोधकत्वमित्येव स्वीकरणीयम्। तथा च पदार्थैकदेशीभूतायां शिखायां ध्वंसप्रतियोगिरूपपदार्थान्वये पदार्थः पदार्थेनान्वेतीति नियमस्य व्यभिचारो दुर्वार एवेति चेन्न। चैत्रस्य गुरुकुलमित्यादौ व्यभिचारवारणायासत्यामाकाङ्क्षायामिति विशेषणवत् स्वर्गो ध्वस्त इत्यादावेकदेशान्वयानुरोधेन सत्येकदेशान्वयप्रयोजकानादितात्पर्ये इति विशेषणपदार्थः पदार्थेनेत्यत्रावश्यकत्वात्।

नन्वत्र बोधः कीदृशः ध्वंसप्रतियोगी स्वर्गवान् पुरुष इत्येतादृश इति चेत् स्वर्गशालि(ली)त्यपि स्वर्गो ध्वस्त इत्यादि प्रयोगापत्तेः। वर्तमानध्वंसप्रतियोग्युत्पत्तिकस्वर्गवानित्यन्वयबोध इति चेत् स्वर्गोत्पत्तेर्द्वितीयक्षणेऽपि स्वर्गो ध्वस्त इति प्रयोगापत्तेः। पुरुषवृत्तिः स्वर्गो वर्तमानध्वंसप्रतियोगीति बोधं इति चेत् पदार्थोपस्थितावुपसर्जनस्य विशेष्यत्वे विशेषणस्य च विशेषणत्वे घटो नित्य इत्यादेरपि घटवृत्तिघटत्वं नित्यमित्याद्यन्वयबोधसम्भवेन प्रामाणिकत्वापत्तेः। स्वर्गविशिष्टो ध्वंसप्रतियोगीति बोध इति चेद् विशेष्ये ध्वंसप्रतियोगित्वस्य बोधेनाप्रामाण्यापत्तेः विशिष्टवैषिष्ट्यबोधस्थले विशेषणतावच्छेदकस्य परम्परासम्बन्धेन विशेष्यान्वयवत् विशिष्टवैशिष्ट्यमिति बोधे वर्तमानध्वंसप्रतियोगिनो विशेषणे साक्षात्सम्बन्धेन विशेष्ये परम्परासम्बन्धेनान्वये बाधकाभावान्नायोग्यतेति चेत् स एव सम्बन्धो न ज्ञायते येन विशेष्येऽन्वयः स्यादत्रोच्यते – **स्वाभिन्नाश्रयत्वं विशेष्ये सम्बन्धः।**

न च घटो नित्य इत्यादेरपि स्वाभिन्नाश्रयत्वसम्बन्धेन नित्यस्यापि घटेऽन्वये बाधकाभावेन प्रामाण्यं स्यादिति वाच्यम्। नहि निमित्तमस्तीत्यारोपे आरोपे सति निमित्तानुसरणमिति न्यायेन प्रामाणिकस्वर्गो ध्वस्त इत्यादिप्रयोगनिर्वाहमात्रस्यैवाश्रयणीयत्वात्। अन्यथा लोहितः स्फटिक इत्यादौ लौहित्यस्य स्फटिके परम्परासम्बन्धेन भानवत् स्वाश्रयसंयोगित्वेन तस्याकाशे सत्त्वेन लोहित आकाश इत्यादेरपि प्रामाण्यापत्तिरतः स्फटिकत्वविशिष्टानुयोगिकत्वविशिष्टपरम्परायाः लौहित्यनिरूपितसंसर्गत्वं स्वीक्रियते न त्वाकाशाद्यनुयोगिकत्वविशिष्टपरम्परायाः लोहित आकाश इत्याद्यभियुक्तप्रयोगाभावात्। तथा च प्रकृते पुरुषानुयोगिकत्वविशिष्टस्वाभिन्नाश्रयत्वस्य ध्वंसप्रतियोगि-निरूपित-संसर्गित्वं स्वर्गो ध्वस्त इत्याद्यभियुक्त-प्रयोगात्। न तु घटाद्यनुयोगिकत्व-विशिष्ट-स्वाभिन्नाश्रयत्वस्य नित्यादिनिरूपितसंसर्गत्वं घटो नित्य इत्याद्यभियुक्तप्रयोगाभावात्। एवं च सविशेषणे हीत्यादिन्यायस्य विशेष्ये विधिनिषेधयोः साक्षात्सम्बन्धेन बाधे सति विशेषणे साक्षात्सम्बन्धेन विशेष्ये परम्परासम्बन्धेन पर्यवसानमित्यर्थः।

इत्थं च 'शृणु गर्जति मेघ' इत्यादावपि गर्जनाश्रयमेघकर्मक- श्रावणाश्रयस्त्वमिति बोधस्वीकारे

मेघस्य साक्षात्सम्बन्धेन श्रावणकर्मत्वबोधेन गर्जने विशेषणे साक्षात्सम्बन्धेन श्रावणकर्मत्वं गर्जनविशिष्टे मेघे विशेष्ये स्वाश्रयाश्रयत्वसम्बन्धेनेति गर्जनविशिष्टमेघस्य कर्मत्वसम्बन्धेन श्रावणे अन्वयसम्भवेन नायोग्यता न वा गर्जनकर्मकश्रावणानन्वयापत्तिः। नन्वेवमपि स्वाभिन्नाश्रयत्वसम्बन्धेन ध्वंसप्रतियोगिनो नामार्थस्य गीतीनामार्थ्ये अन्वयस्वीकारे नामार्थयोरिति व्युत्पत्तिभङ्ग इति चेन्न। निपातस्थल इवात्रापि व्युत्पत्तिसङ्कोचात्।

न च निपातस्थले व्युत्पत्तिसङ्कोच उभयवादिसिद्धो नात्र तथेति वाच्यम्। गत्यन्तराभावेनैतत्सङ्कोचस्याप्युभयवादि-सिद्धत्वात्। सविशेषणे इति न्यायस्य स्वर्गो ध्वस्त इत्यादौ धर्मिवाचकशब्दस्य धर्ममात्रतात्पर्यग्राहकत्वेन स्वर्गध्वंसप्रतियोगीत्यन्वयबोधस्वीकारेण नामार्थयोरिति व्युत्पत्तेः पदार्थेनेति व्युत्पत्तेश्चासङ्कोचसम्भवे सङ्कोचाश्रयणेन परम्परासम्बन्धेनान्वयबोध- स्वीकरणमन्याय्यमिति वाच्यम्। स्वर्गो ध्वस्त इत्यादौ धर्मिग्रहणवैयर्थ्यापत्तेस्तथा च स्वाभिन्नाश्रयत्वसम्बन्धेन ध्वंसप्रतियोगिनो धर्मेणान्वयविवक्षास्थले स्वर्गो ध्वस्त इति स्वर्गमात्रे ध्वंसप्रतियोग्यन्वयविवक्षास्थले स्वर्गो ध्वस्त इति प्रयोगः। लौकिकानां शास्त्रकाराणाञ्च विवक्षाभेदेनाथशब्दो निरूप्यते। श्रुतोऽयमर्थः शङ्खः श्रूयते इत्यादिप्रयोगदर्शनात्। तत्र शब्दो निरूपणविषय इत्यन्वयबोधे निरूपणस्य ज्ञानानुकूल-व्यापारतया तस्य निर्विषयत्वेऽपि तज्जन्यज्ञानानुविषयत्वमादायैव शब्दे निरूपणविषयत्वं स्वीक्रियते। श्रुतोऽयमर्थः इत्यत्रार्थे श्रुधात्वर्थकर्मत्वाभावेऽपि श्रावणविषयशब्दजन्यज्ञानविषयत्वमादौ वार्थे श्रुधात्वर्थकर्मता शङ्खः श्रूयते इत्यत्र शङ्खस्य तत्कर्मताभावेऽपि शङ्खध्मातस्य तत्कर्मतया तदवच्छेदकशङ्खस्यापि तत्कर्मत्वमुपगम्यते। इत्थं च 'शृणु गर्जति मेघ' इत्यादौ गर्जनविशिष्टमेघस्यापि श्रावणविषयीभूतगर्जनाश्रयतया श्रावणकर्मत्वाभ्युपगमे गर्जनस्य मुख्यकर्मत्वं मेघस्य च गौणकर्मत्वमिति विवक्षयैतादृशप्रयोगे गर्जनादेः श्रवणविषयत्वरूपविवक्षितार्थलाभे बाधकाभाव इत्यभिप्रेत्य विशेषणेषु गर्जन-गानाभावेषु श्रवणदर्शनान्यसम्भवादित्युक्तम्।

ननु गर्जनादेरेव श्रुधात्वर्थकर्मत्वाभिप्रायेण तथा सति वैयाकरणामतप्रवेशापत्तिः। ननु मेघगर्जनं शृणु मृगधावनं पश्येत्यादिप्रयोगेऽपि गर्जनादेः श्रवणकर्मत्वं तत्कर्मीभूत-गर्जनाश्रयतया मेघस्य परम्परया श्रावणकर्मत्वं विवक्षितं सम्भवति। एवं धावनस्य मृगादेश्च दर्शनविषयत्वं सम्भवतीति शृणु गर्जति मेघः, पश्य मृगो धावतीत्येवंविधवक्रप्रयोगाश्रयणं ऋजुबुद्धिनां न शोभावहमिति चेन्न , साहित्यशास्त्रवासनावासितहृदयानां कुटिलमार्गगमनेनैव चमत्कारोदयदर्शनात्।

---

1. सति विशेष्ये बोधे - क ; ख omits सति विशेष्ये बाधे
2. विशेषणमनुभवत - ख, विशेषणमुपसङ्क्रामत - ग

**T13. यत्तु 'शृणु गर्जति मेघ' इत्यादौ श्रवणे मेघकर्मकत्वाभावेन [1] प्रथमान्तार्थ [2] एव कर्मत्वमित्यपास्तमिति तन्न 'सविशेषणे हि' इति न्यायेन श्रवणे गर्जनविशिष्टमेघकर्मक [3] कर्मत्वबाधेऽपि [4] गर्जन-कर्मत्वस्यान्वयसम्भवात् कर्मत्वे [5] प्रथमार्थतेति [6] सम्यगेवोक्तमिति पदार्थत्वे [7] प्रकारतया भानं विशेषः।**

---

**T13.** ननु पश्य मृगो धावतीत्यत्र धात्वर्थ-नामर्थयोरभेदातिरिक्त-सम्बन्धेनान्वयबोधकस्य पचतीत्यादिप्रयोग-प्रामाण्य-वारणाय व्युत्पन्नतया मृगस्य कर्मतासम्बन्धेन दर्शनेऽन्वयो न भवतीत्याशङ्क्य केनचिन्मृगपदोत्तर-प्रथमायाः कर्मत्वमर्थस्तत्र मृगस्याधेयता-सम्बन्धेनान्वयः कर्मत्वस्य निरूपकत्वेन दर्शनेऽन्वय इत्युक्तं, तद् दूषितम् । शृणु गर्जति मेघ इत्यादौ श्रावणे मेघपदोत्तर-प्रथमार्थकर्मत्वस्यायोग्यतयासम्भवादित्युपाध्यायव(चनं) प्रामाण्ययुक्तमनुवदति -- **यत्त्विति** । अपास्तमित्यत्र हेतुभूतैतेनेत्यस्य श्रवणे मेघकर्मत्वाभावेनेति व्याख्यानभूतं द्रष्टव्यम्। खले कपोतन्यायेन राजपुरप्रवेशन्यायेन वा शाब्दबोधाभ्युपगमे गर्जनाश्रयत्वे आश्रयत्वस्य मेघे मेघस्य कर्मत्वे कर्मत्वस्य च श्रुधात्वर्थेऽन्वयेन गर्जनाश्रयत्वविशिष्टमेघस्य कर्मत्वे तादृशमेघनिष्ठकर्मत्वस्य च श्रुधात्वर्थेऽन्वयेन वा सविशेषणे हीति न्यायेन विशेषणांश एव विवक्षाभ्युपगमेन गौणकर्मत्वस्य मेघे ऽप्यबाधितत्वादित्याशयेन दूषयति – **तन्नेति**। कर्मत्वं बोधयति गर्जनविशिष्टमेघस्य मुख्यकर्मत्वबोधेऽपीत्यर्थः। गर्जनकर्मत्वस्यान्वयसम्भवादिति। गर्जनविशिष्टमेघस्य श्रुधात्वर्थगौणकर्मत्वमपि गर्जनस्य तत्कर्मत्वविवक्षायामेवोपपद्यते इति गर्जनकर्मत्वस्य श्रुधात्वर्थे बाधसम्भवादित्यर्थः। श्रवणे मेघकर्मत्वबोधेऽपि गर्जनकर्मत्वस्यान्वयसम्भवादिति यथाश्रुते प्रथमार्थकर्मत्वे गर्जनस्यान्वयो न तु गर्जनविशिष्टमेघस्येत्यर्थो भासते स चानुपपन्नः प्रथमार्थे प्रातिपदिकार्थस्य मेघस्यैवान्वयस्य युक्ततया गर्जनस्याप्रातिपदिकार्थत्वेनान्वय-योग्यत्वात्। प्रत्ययानामिति व्युत्पत्तेः।

एवं च मृगो धावतीत्यत्र धात्वर्थ-नामार्थयोरभेदातिरिक्तकर्मत्व-रूपसम्बन्धेनान्वयानुपपत्त्या मृगपदोत्तरप्रथमायाः कर्मत्वार्थकस्वीकरणं 'शृणु गर्जति मेघ' इत्यादौ मेघादेः श्रुधात्वर्थकर्मत्वसम्भवेन न समीचीनमिति भक्षितेऽपि लसूने न शान्तो व्याधिरिति न्यायेन वंशमणिदूषणं न सम्यगेवेत्यभिप्रायेणाह -- कर्मत्वं प्रथमार्थ इति। सम्यगेवोक्तमिति सम्यक्त्वं चेह वंशमण्युक्तदूषणग्रस्तत्वमेव न तु सर्वथातिदुष्टत्वं सविभक्ताविति वक्ष्यमाणदूषणग्रासात्। कर्तृकर्मणोः कृतीति षष्ठ्याः कर्मत्वेऽनुशासनवत्प्रथमायाः कर्मत्वेऽनुशासनाभावात्। अन्यथानुपपत्त्या च स्वारसिकलक्षणाश्रयणस्य प्रथमायाः कुत्रचिदशक्यत्वेन स्वीकर्तुमशक्यत्वाच्च।

न च प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेत्यत्र शासनेन प्रथमाविभक्तेरपि लिङ्गादौ शक्तत्वमस्येवेति वाच्यम्। तत्सूत्रस्य प्रथमाव्यञ्जकत्वमात्राभिप्रायकत्वादिति ननु पश्य मृगो धावतीत्यत्र कर्मत्वसम्बन्धेन मृगस्य दर्शनक्रियापेक्षया कर्मत्वस्य प्रथमार्थत्वे को विशेषः । न च धात्वर्थ-नामार्थयोरभेदातिरिक्तकर्मत्व-

रूपसम्बन्धेनान्वयोऽव्युत्पन्न इति व्युत्पत्तिविरोधवारणं तस्य तदर्थत्वे विशेष इति वाच्यम्। यादृशसामग्रीसत्त्वे यादृशान्वयबोधोऽनुभवसिद्धस्तादृशसामग्र्यां तद्बोधस्यापादनीयतया तण्डुलः पचतीति समभिव्याहारे तण्डुलकर्मकपाकविशेष्यकान्वय- बोधस्याननुभूतत्वेनातिप्रसङ्गाभावात्। पश्य मृगो धावतीत्यत्र मृगकर्मकदर्शन-विशेष्यान्वयबोधस्यानुभवसिद्धत्वे न कर्मतासम्बन्धेन मृगप्रकारकान्वयबोध एव स्वीकरणीय इति तादृशव्युत्पत्त्यस्वीकारेऽपि दोषाभावादित्यत आह – **पदार्थत्व इति**। विशेष्य इति निरुक्तस्थले मृगकर्मकदर्शनविशेष्यकान्वयबोधस्य मृगकर्मत्व- प्रकारकदर्शनविशेष्यकत्वेनाप्युपपत्तौ प्रथमान्तार्थस्य कर्मतासम्बन्धेन दर्शनेऽन्वयस्य व्युत्पत्तिविरुद्धस्यापि स्वीकारासम्भवादिति भावः।

---

1. क, ग omit मेघकर्मकत्वाभावेन
2. प्रथमार्थ - ग
3. क, ग omit कर्मक
4. कर्मत्वबोधेऽपि - क, ख
5. कर्मत्वं - क, ख
6. प्रथमार्थ इति - क, ग
7. पदार्थत्वेन - क

**T14. वस्तुतस्तु विभक्तौ [1] लक्षणेति नियमात् कर्मत्वं प्रथमार्थो नसम्भवति [2]। किञ्च साधातुत्वमात्रर्थिकायाः प्रथमायाः शक्याभावात् शक्यसम्बन्धरूपा [3] लक्षणाऽपि न [4] सम्भवत्येवेति तत्त्वम् 'शङ्खाः श्रूयन्ते', 'भेर्यः श्रूयन्ते' इति महाभाष्यप्रयोगात्।**

**[5]प्रबुद्धसेन्द्राम्बुदनादधीरं कृष्णार्णवाम्पर्णचरेकहंसः।**
**मन्दानिलापूरकृतं दधानो [6] निध्वानमश्रूय(त) [7] पाञ्चजन्यः।।**

**इत्यतियुक्तप्रयोगाच्च 'सविशेषणे ही'ति न्यायस्य सर्वसम्मतत्वाच्चेति।**

---

**T14**. ननु विशेषानुशासनं विनान्यविभक्त्यर्थेऽन्यविभक्ति-लक्षणास्वीकारे तण्डुलं पचतीतिवत्तण्डुलः पचतीत्यत्रापि लक्षणायाः प्रथमायाः कर्मत्वार्थकत्वसम्भवेन तण्डुलकर्मत्वप्रकारकपाकविशेष्यकान्वयबोधः सम्भवति। तथा च भारतस्य श्रवणं व्यासस्य कृतिरित्यत्रापि कर्तृकर्मणोः कृतीत्यनुशासनं विनापि भारतकर्मकश्रवणं व्यासकर्तृका कृतिरिति कर्मत्वत्वादिप्रकारकान्वयबोधानुरोधे तु षष्ठ्याः कर्मत्वाद्यर्थे लक्षणासम्भवेनानुशासनं व्यर्थं स्यादित्यभिप्रायेणाह - **वस्तुतस्तु विभक्ताविति**। नन्वन्वयानुरोधेनैव विभक्तेर्लक्षणा कर्तृकर्मणोः कृतीत्यनुशासनं तद् द्वितीयातृतीययोर्निवृत्त्यर्थति न वैयर्थ्यमित्यत आह - **किञ्चेति** । शक्याभावादिति प्रातिपदिकार्थमात्र इत्यादिष्वर्थेषु निरुक्तसूत्रस्य प्रातिपदिकस्य तात्पर्यग्राहकतया प्रथमाया अर्थविशेषाशक्ततया शक्यसम्बन्धरूपं लक्षणा न सम्भवतीति भावः।

ननु शृणु गर्जति मेघ इत्यादौ मेघकर्तृकगर्जनस्य साक्षात्कर्मतासम्बन्धेन श्रुधात्वर्थान्वयसम्भवे प्रथमतो गर्जनस्य मेघेऽन्वयमङ्गीकृत्य तद्द्वारा धात्वर्थान्वयस्वीकारः। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति दूरतस्त्याज्य एवेत्यत आह – **'शङ्खाः श्रूयन्ते' इत्यादि**। ध्यायमाना 'शङ्खाः श्रूयन्ते' इत्यर्थः। 'भेर्यः श्रूयन्ते' शब्दायमाना 'भेर्यः श्रूयन्ते' इत्यर्थः। तथा च ध्यानविशिष्टशङ्खाः श्रवणकर्मत्वाश्रयीभूताः ध्यानविशिष्टशङ्खाभिन्नबहुत्वावच्छिन्न- कर्मवृत्तिश्रवणानुकूलो व्यापारः। शब्दविशिष्टा भेर्यः। श्रवणकर्मत्वाश्रयीभूताः शब्दविशिष्ट- भेर्यभिन्नबहुत्वावच्छिन्नकर्मवृत्तिश्रवणानुकूलो व्यापार इत्याद्यन्वयबोधस्वीकारे सविशेषण हीति न्यायेन शङ्खविशेषणीभूतशब्दे श्रुधात्वर्थकर्मत्वस्यान्वयस्वीकारस्यावश्यकतया शृणु गर्जति मेघ इत्यादावप्युक्तन्यायेनान्वयबोधस्वीकारे बाधकाभाव इति भावः। ननु 'शङ्खाः श्रूयन्ते' इत्यादौ शङ्खादिपदस्य ध्यायमान-शङ्खादौ लक्षणाया आवश्यकत्वे प्रोखादिशब्दे शङ्खादिपदस्य लक्षणास्वीकारेणापि तत्र साक्षाच्छ्रुधात्वर्थकर्मत्वान्वय सम्भवेन सविशेषण हीति न्यायेनावतरतीति कथं तन्न्यायेन प्रकृते निर्वाह इत्यत आह - **निध्वानमश्रूयत पाञ्चजन्य** इत्यादि। तत्र हि निरुक्तविशेषणविशिष्टनिध्वानाश्रयीभूत-पाञ्चजन्याभिन्नैककर्म- वृत्त्यतीतोत्पत्तिकश्रवणानुकुलो व्यापार इति जनकर्तृकातीतोत्पत्तिकश्रवण-कर्मत्वाश्रयीभूतो निरुक्तविशेषणविशिष्टनिध्वानाश्रयीभूतः पाञ्चजन्य इत्येव प्रकारेणान्वयबोधस्यावश्यकतया सविशेषणे पाञ्चजन्ये श्रवणकर्मत्वबोधनतद्विशेषणे निध्वाने तत्कर्मत्वपर्यवसानमिति सविशेषणे हीति

न्यायस्वीकार आवश्यक इति शृणु गर्जति मेघ इत्यादावपि प्रथमान्तार्थमुख्यविशेष्यक-बोधस्वीकारेऽपि तन्न्यायेन निर्वाह इति भावः।

---

1. ख adds न after विभक्तौ
2. भवति - ख
3. ..रूप for रूपा
4. क, ख drop न
5. ख omits प्रबुद्धसेन्द्राम्बुदनादधीरं कृष्णार्णवाम्पर्णचरेकहंसः।
   मन्दानिलापूरकृतं दधानो
6. मन्द्रानिलापूरकृतादधानो for मन्दानिलापूरकृतं दधानो - क
7. निधानतश्श्रूयते - क ; निधानमत्र श्रूयते - ख; निध्वानमश्रूय

**T15 : यत्तु किञ्चैवं मृगे संख्यान्वयो न स्यात्। आख्यातोपस्थाप्य-संख्याप्रकारकान्वयबोधं प्रति मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितेर्हेतुत्वात्। अन्यथा 'हंसीव धवला कीर्ति'रित्यत्र हंस्यामपि संख्यान्वयप्रसङ्गः। मृगे [1] संख्यानन्वये इष्टापत्तौ च 'पश्य धावति मृगाः' इत्यादेरपि साधुत्वापत्तेरिति तत्र , तत्र मुख्येति न वक्तव्यम्, चैत्र एव पचतीत्यादौ व्यभिचारात्। अन्ययोगव्यवच्छेदतयैवकारार्थैकदेशे [2] चैत्रस्य विशेषणत्वेन मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितिविषयत्वाभावात् 'चैत्रान्यो न पचति' 'चैत्रः पचती'ति तदर्थात्।**

---

**T15** : ननु पश्य मृगो धावतीत्यत्र धावनानुकुलकृतिनिष्ठसमवायसम्बन्धावच्छिन्न-प्रकारतानिरूपितमृगनिष्ठ-विशेष्यत्वाभिन्न-कर्मतासम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यत्वाभिन्नविशिष्टकर्मत्वसम्बन्धावच्छिन्नप्रकारतानिरूपित-मृगनिष्ठ- विशेष्यत्वाभिन्न-धावननिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नशक्यार्थनिष्ठस्व- निरूपित- सम्बन्धावच्छिन्न- प्रकारतानिरूपित-विशेष्यत्वाभिन्नाश्रयत्वनिष्ठस्वरूप- सम्बन्धावच्छिन्नप्रकारतानिरूपित- युष्मत्पदार्थनिष्ठमुख्य- विशेष्यताशाली-धावनकर्तृमृगकर्मकदर्शनाश्रयस्त्वमिति बोधो जायत इत्युक्तं - शृणु गर्जति मेघ इत्यादावपि गर्जनाश्रयत्वनिष्ठ-स्वरूपसम्बन्धावच्छिन्न- प्रकारतानिरूपित- मेघनिष्ठविष्यत्वाभिन्न- कर्मतासम्बन्धावच्छिन्न- प्रकारतानिरूपित-विशेष्यत्वाभिन्न- विशिष्टकर्मत्व-सम्बन्धावच्छिन्नगर्जननिष्ठ-प्रकारतानिरूपितविशेष्यत्वाभिन्नस्वरूप-सम्बन्धावच्छिन्नाश्रयत्वनिष्ठ- प्रकारतानिरूपितत्वं पदार्थनिष्ठ- मुख्यविशेष्यता- शालीबोधो गर्जनविशिष्ट-मेघकर्मक- श्रवणाश्रयस्त्वमिति ध्यानाश्रयशङ्खोऽतीतोत्पत्तिकश्रवणकर्मत्वाश्रय इत्याद्यन्वयबोधः स्वीकर्तव्यः। स च वह्निना सिञ्चतीत्यादौ सेकैर्वह्निकरणत्वान्वय इव बाधितः। श्रवणत्वविशिष्टमेघविषयकत्वबोधगर्जनस्य धर्मिपारतन्त्र्येण श्रवणेऽन्वयासम्भवादिति चेन्न। साक्षात्सम्बन्धेन गर्जनविशिष्टमेघस्य श्रुधात्वर्थकर्मत्व-बोधेऽपि स्वाश्रयगर्जनवत्त्वसम्बन्धेन मेघे कर्मत्वान्वये बाधकाभाव इति गर्जनविशिष्टमेघं धर्मिणं द्वारीकृत्य तद्विशेषणगर्जनस्य निरुक्तसम्बन्धेन श्रुधात्वर्थेऽन्वयसम्भवात् ।

ननु शृणु गर्जति मेघ इत्यादौ तार्किकमतेऽपि सविशेषणे हीति न्यायेन योग्यत्वव्यवस्थापनेऽपि मेघादौ गर्जतीत्येकवचनोपस्थाप्यसंख्याया अन्वयो न स्यात्। पचति चैत्र इत्यादावाख्यातार्थकृतिभूतभावनामुख्यविशेष्य एव चैत्रे तदुपस्थाप्य संख्यान्वयस्य दृष्टतया गर्जनाश्रयमेघस्य श्रवणक्रियायां विशेषणतया मुख्यविशेष्याभावात् इतराविशेषणस्यैव मुख्यविशेष्यत्वादन्यथा चैत्रो मैत्र इव गच्छतीत्यत्र मैत्रनिरूपित-दृश्याश्रयचैत्रो गमनानुकुलकृतिमानेक इत्यन्वयबोधे आख्यातोपात्तसंख्याया चैत्र इव मैत्रेऽप्यन्वयः स्यात्। प्रथमान्त- पदोपस्थाप्यत्वस्य तत्र सत्त्वात् न चेतराविशेषणानिष्ट-विशेष्यता-सम्बन्धेन प्रथमान्तपदजन्योपस्थिति-विशेष्यासम्बन्धेनाख्यातार्थ-संख्यान्वयबोधं प्रति हेतुरिति स्वीकारेण प्रकृते मैत्रे निरुक्तसम्बन्धेन तादृशोपस्थितेरभावान्न तत्र तदन्वयापत्तिरिति वाच्यम्। शृणु गर्जतीत्यादावपि

मेघादौ तदुस्थितेर्निरुक्तसम्बन्धेनाभावेन तदुपात्त-संख्यानन्वयापत्तेर्दुर्वारत्वात्। न च देवदत्तेन सुप्यते इत्येकवचनोपातैकत्वस्योपस्थितस्याप्यन्वयाभाववत् गर्जतीत्येकवचनोपस्थाप्यैकत्वान्वयो मेघे नेष्यत एवाविवक्षितत्वादिति वाच्यम्।

तर्हि गर्जति मेघ इत्यपि प्रयोगापत्तेरित्याशयवाननुवदति - यत्त्वित्यादिसाधुत्वापत्तेरित्यन्तेन कीर्तीत्यत्र भातीति क्रियाध्याहारः साधुत्वापत्तेरिति। धावति मृग इत्याख्यातोपात्तसंख्यायाः विवक्षितत्वेनैक-वचनोपस्थाप्यैकत्वस्य मृगेष्वन्वयाभावेन तादृश- वाक्यस्यायोग्यत्वाभावादित्यर्थः। मुख्यविशेष्यतासम्बन्धेन प्रथमान्तपद- जन्योपस्थितिर्विशेष्यतासम्बन्धेनाख्यातार्थ- संख्यान्वयबोधं प्रति हेतुरिति न स्वीक्रयते। येन मृगादेः कर्मतया दृशि-क्रियायां विशेषणत्वेन तत्र तादृश-सम्बन्धेन तदुपस्थितेरभावात् संख्यान्वयो न स्यात्। तदनन्वये धावति मृगा इत्यादेरापत्तिश्च स्यात्। अपि तु विशेष्यता-सम्बन्धेन तदुपस्थितिस्तदन्वयबोधे कारणमित्यभ्युपगम्यते। तथा च विशेष्यता-सम्बन्धेन तदुपस्थितेरमृगसत्त्वेन मृगो धावतीत्यादावेकत्वान्वयानुपपत्तिर्धावतीत्येक- वचनोपातैकत्वस्य विवक्षितस्य मृगेषु बाधेन न वा धावति मृगा इत्यादेरयोग्यस्य योग्यत्वापत्तिरित्यभिप्रायेण समाधत्ते - **तन्न तत्र मुख्येति न वक्तव्यमिति**।

ननु निरुक्तकार्यकारणाभावे विशेष्यतायां मुख्यत्वानिवेशे 'हंसीव धवलेत्यत्र हंस्यामपि संख्यान्वयप्रसङ्ग इत्युक्तमिदानीं कथमुच्यते - तत्र मुख्येति न वक्तव्यमिति चेन्न। तत्र हंस्यां संख्यान्वयस्वीकारे इष्टापत्तेः चैत्र एव पचतीत्यादौ विशेष्यतायां मुख्यत्वनिवेशे व्यभिचाराच्च। तथा च मुख्येति न वक्तव्यमिति समीचीनमेवोक्तम् इत्यभिप्रायेणाह – **चैत्र एव पचतीत्यादौ व्यभिचारादिति**। मुख्यविशेष्यता-सम्बन्धेन तदुपस्थितेस्तत्र हेतुत्वस्वीकारे तत्र प्रतिज्ञातव्यभिचारं स्फुटयति – **अन्ययोगव्यवच्छेदेत्यादिना**। तत्र अन्यस्मिन्योगस्तादात्म्यम्। तस्य व्यवच्छेदोऽत्यन्ताभावः। यत्र यस्य तादात्म्याभावस्तत्र तद्भेद इति नियमेन भेदवन्निष्ठभेद इति प्राप्तं तथा च भेद आश्रयो भेदः प्रतियोगितावच्छेदकत्वं एवकारार्थो यथा पार्थ एव धनुर्धर इत्यादौ पार्थशब्दोत्तरैवकारार्थो भेद आश्रयो भेदः प्रतियोगितावच्छेदकत्वं तत्र प्रतियोगितासम्बन्धे पार्थस्य भेदे विशेषणताविशेषसम्बन्धेन भेदस्य आश्रये आधेयतासम्बन्धेन आश्रयस्य भेदे स्वनिरूपितत्वसम्बन्धेन भेदस्य प्रतियोगित्वे स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकत्वस्य विशेषणतावच्छेदके धनुर्धरत्वे तादात्म्यसम्बन्धेन, धनुर्धरत्वावच्छिन्नस्य पार्थेऽन्वयस्तथा च प्रतियोगित्वसंसर्गावच्छिन्न पार्थनिष्ठप्रकारतानिरूपित- विशेष्यत्वाभिन्न- विशेषणताविशेष- संसर्गावच्छिन्न-भेदनिष्ठप्रकारतानिरूपित- विशेष्यत्वाभिन्नाधेयता- संसर्गावच्छिन्नाश्रयनिष्ठ- प्रकारतानिरूपित -विशेष्यत्वाभिन्न-स्वनिरूपितसंसर्गावच्छिन्नभेद- निष्ठप्रकारतानिरूपित- विशेष्यत्वाभिन्न- प्रतियोगित्व-प्रकारतानिरूपितविशेष्यत्वाभिन्न-स्वरूप-संसर्गावच्छिन्न-प्रतियोगित्वावच्छेदकत्वनिष्ठ-प्रकारतानिरूपितविशेष्यत्वाभिन्न-धनुर्धरत्व- प्रकारतानिरूपितविशेष्यत्वाभिन्न- तादात्म्य-संसर्गावच्छिन्न-धनुर्धरनिष्ठप्रकारता- निरूपित-पार्थनिष्ठ- मुख्यविशेष्यताशाली पार्थान्यनिष्ठ- भेदप्रतियोगितावच्छेदक-धनुर्धरत्वावच्छिन्नाभिन्नः पार्थ इत्यन्वयबोधो निष्पन्नः। एवं चैत्र एव पचतीत्यादावपि चैत्रान्यनिष्ठ-भेदप्रतियोगितावच्छेदक- पाकानुकूलकृतिमानेकश्चैत्र इत्यन्वयबोधो द्रष्टव्यः।

एवं च चैत्रस्य भेदे विशेषणत्वे नेतराविशेषण- निष्ठविशेष्यतासम्बन्धेन प्रथमान्तपद-जन्योपस्थितेस्तत्राभावेन एकत्वान्वयबोधात्तत्र व्यभिचारः स्फुट एवेत्येदभिप्रेत्याह - एवकारार्थैकदेश इत्यादि। एकदेशे भेदे प्रथमान्तपदजन्योपस्थितिविषयत्वाभावात्। इतराविशेषणनिष्ठ- विशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितेरभावात् कथं चैत्रस्य भेदे विशेषणत्वमित्यत आह – **'चैत्रान्यो न पचति' इत्यादि।** 'चैत्रान्यनिष्ठभेदप्रतियोगितावच्छेदक- पाकानुकूलकृतिमानेकश्चैत्र इत्येव 'चैत्रान्यो न पचति' 'चैत्रः पचति' इत्यस्यार्थः।

---

1. मृग for मृगे - क, ख
2. अन्ययोगव्यवच्छेदरूपैवकारार्थैकदेशे - ग

**T16. तथा च 'चैत्र एव पचती'त्यत्र चैत्रे संख्यान्वयार्थमाख्यातोपस्थाप्य-संख्याप्रकारकान्वयबोधं [1] प्रति विशेष्यतया प्रथमान्तपदजन्योपस्थितिर्हेतुरित्येव कार्यकारण-भावोऽङ्गीकर्तुमुचितः। अन्यथा 'हंसीव कृष्ण ते कीर्तिः', 'स्वर्गङ्गामवगाहत' इत्याद्युपमाने संख्यान्वयाङ्गीकारे स्वर्गङ्गावगाहनाश्रयत्वस्याख्यातार्थस्य संख्यायाश्च साधारण- धर्मत्वानुपपत्तेः। 'हंसीव कृष्ण ते कीर्ति'रित्यादीनामप्यसाधुत्वापत्तौ चालङ्कारिकमते वैरस्यापादक-लिङ्गवचनभेदस्योपमानोपमेयनिष्ठस्य दुष्टत्वं न स्यात्। संख्याकालातिरिक्ताख्यातार्थो भावना भावनान्वयिनि संख्यान्वय इति नियमाच्च [2]। क्वचिद् विशेष्यस्य क्वचिद् विशेषणस्य परामर्शात् तात्पर्यविषयपरामर्शित्वं तच्छब्दस्येति मतं, परन्तु पदार्थतावच्छेदक- रूपविशेषणस्य क्वचिन्न परामर्श इति महामहोपाध्याय-मैथिल-श्रीवंशमणिशर्म-प्रणीतो [3] वाक्यवादस्समाप्तः। [4]**

---

**T16.** ननु 'चैत्रान्यपाकानुकूलकृत्यभाववान् पाकानुकूलकृतिमांश्चैत्र इति नातो विशेष्यभेदेन वाक्यभेदापत्तिः। तदर्थात् चैत्र एव पचतीत्यस्यार्थात् मुख्य- विशेष्यतासम्बन्धेन तदुपस्थितेस्तत्र कारणत्वानङ्गीकारे केन सम्बन्धेन तत्र तस्याः कारणत्वमित्याशङ्क्य मुख्यामुख्यसाधारणविशेष्यतासम्बन्धेन तस्याः कारणत्वमित्याह – **तथा चेति**।

अन्यथा मुख्य-विशेष्यतासम्बन्धेन तदुपस्थितेऽकारणत्वानङ्गीकारे 'हंसीव कृष्ण ते कीर्तिरित्यत्र एकत्वाश्रयहंसीनिरूपित- सादृश्याश्रयत्वहंसत्वसम्बन्धिनी 'स्वर्गङ्गा कर्मकावगाहनाश्रयत्ववतीत्यन्वयबोधस्तथा च संख्यावगाहनाश्रयत्वयोरुपमानोपमेयसाधारण- धर्मत्वेन 'हंसीव कृष्णेत्यादेः साधुत्वं हंस्या संख्यान्वयानङ्गीकारेऽसाधुत्वम्। इत्थं च उपमानोपमेयनिष्ठ-लिङ्गवचनभेदे सत्यपि तद्वाक्यासाधुत्वेन व्यतिरेकव्यभिचाराद् वैरस्यापादक-लिङ्गवचनभेदस्योपमेयनिष्ठस्यालङ्कारिकमते दुष्टत्व-नियामकत्ववर्णनं न स्यादित्याह – **इत्याद्युपमान इत्यादि**। दुष्टत्वं न स्यादित्यनेन उपमाने हंस्यां संख्यान्वयानङ्गीकारे आख्यातार्थ-संख्यान्वयानङ्गीकारे साधारणधर्मत्वानुपपत्तेरिति अङ्गीकर्तुमुचित इत्यत्र हेतुः।

ननु संख्यायास्तत्साधारणधर्मत्वाभावे को दोष इत्यत आह – **हंसीवेत्यादि**। असाधुत्वापत्तावित्यतः पूर्वमुपमानोपमेयवाचकपदयोर्लिङ्गवचनैक्येऽपीति शेषस्तथा च र्लिङ्गवचनैक्येऽसाधुत्वापादने न व्यतिरेकव्यभिचारो दर्शितः। **दुष्टत्वं दुष्टनियामकत्वं न स्यादिति**। तथा च संख्यायास्तत्साधारणधर्मत्वाभावे अयमेव दोष इति मुख्यामुख्य-साधारण-विशेष्यतासम्बन्धेन तस्यास्तत्र कारणत्वमुचितमिति भावः। विशेष्यतायां मुख्यत्वनिवेशे हंस्यामपि संख्यान्वय-प्रसङ्गो यो दत्तस्तस्य मुख्येति न वक्तव्यमित्यर्थाक्षिप्तेष्टापत्त्या वारणं विशेष्यताया मुख्यत्वनिवेशे व्यभिचारापादनं प्रस्तुतोपमाने संख्यान्वयानङ्गीकारे दुष्टत्वं न स्यादित्यनिष्टापादनं च कृत्वा संख्या-मुख्य-साधारण-

विशेष्ययतासम्बन्धेन तस्यास्तत्कारणत्वस्यापि तमधुना तेनैव सम्बन्धेन तत्कारणत्वे मानान्तरमाह – **संख्याकालातिरिक्ताख्यातार्थो हीत्यादिना**। भावनान्वयिनि संख्यान्वय इति नियमाच्चेति। कर्तृप्रत्ययस्थले कर्ता भावनान्वयी कर्मप्रत्ययस्थले कर्म भावनान्वयि। उभयोरप्युभयत्र प्रथमान्तपदोपातत्वमिति विशेष्यतासम्बन्धेनैव तस्यास्तत्कारणत्वं लभ्यते न तु मुख्यविशेष्यतयापि भावनान्वयिमात्र एव संख्यान्वयाभिधानात्तथा च पश्य मृगो धावतीत्यादौ मृगादेः कर्मतया दर्शनविशेषणत्वेऽपि विशेष्यतया तदुपस्थितेस्तत्र सत्त्वेन न संख्यान्वयानुपपत्तिरिति भावः।

यद्वा, ननु विशेष्यतासम्बन्धेन तदुपस्थितेस्तत्र कारणत्वे तण्डुलः पचतीत्यादिलाक्षणिकप्रयोगे तदुपस्थितेस्तेन सम्बन्धेन तण्डुले सत्त्वेन संख्यान्वयानुपपत्तिरित्यत आह --- **संख्याकालातिरिक्तेत्यादिभावनान्वयिनि संख्यान्वय इति**। मूलस्य यो वस्तुगत्यां भावनान्वयी तन्निष्ठविशेष्यता सम्बन्धेन प्रथमान्तपदजन्योपस्थितिः संख्यान्वयबोधे कारणमित्यत्र तात्पर्यतया च तत्र तण्डुले भावनान्वयाभावे न तादृशसम्बन्धेन तदुपस्थितेरभावात्तत्र संख्यान्वयापत्तिरिति भावः। ननु निरुक्तसम्बन्धेन तदुपस्थितेस्तत्र कारणत्वाङ्गीकारे भूतले घटो नास्तीत्यत्र भूतलवृत्तिघटाभावोऽस्तित्वाश्रय इति बोधेऽभावस्य भावनान्वयित्वेनाभावे संख्यान्वयो वक्तव्यस्तथा सति भूतले घटो नास्तीत्येतस्यापत्तिरस्तीत्येक- वचनोपातैकत्वस्याभावेऽबाधात्।

न चाभावस्य भावनान्वयित्वेऽपि प्रथमान्तपदोपस्थाप्यत्वाभावान्न तत्रैकत्वान्वयापत्तिरिति वाच्यम्। नतूत्तरविभक्तेर्लुप्तायाः स्मरणेन तदर्थस्यापि प्रथमान्तपदोपस्थाप्यत्वादन्यथा घटो नास्तीत्यत्राप्यभावे एकत्वान्वयानुपपत्तेः न च तत्र भूतलवृत्त्यभावप्रतियोगि घटोऽस्तीति बोधस्तथा च घटस्य भावनान्वयित्वेन तत्रैव तदुक्तसंख्यान्वय इति भूतले घटो नास्तीत्यत्र तदुक्तैकत्वस्य भावनान्वयि घटद्वये बाधेनायोग्यत्वमिति वाच्यम्। क्व इत्यधिकरणाकाङ्क्षापत्तेरिति चेन्न। नञ्-समभिव्याहारस्थले यो भावनान्वय्या भावप्रतियोगितानिष्ठ-विशेष्यतासम्बन्धेन तदुपस्थितेः संख्यान्वयबोधे कारणत्वं नञ्-समभिव्याहारस्थले यो वस्तुगत्या भावनान्वयी तन्निष्ठविशेष्यतासम्बन्धेन तदुपस्थितेः संख्यान्वयबोधे कारणत्वम्। एवं च घटो नास्तीत्यत्र घटाभावोऽस्तीति बोधे भावनान्वय्यभावप्रतियोगिनि घटे एकत्वान्वयसम्भवेन योग्यत्वं घटो नास्तीत्यत्र तादृशे घटद्वये एकत्वान्वयसम्भवे नायोग्यत्वं घटौ न स्त इत्यत्र तादृशे घटद्वये स्त इति द्विवचनोपात्त-द्वित्वान्वयसम्भवे न योग्यत्वमिति निरुक्तदोषाभावात्।

यद्वा भूतले घटो नास्तीत्यत्र निरूपितत्वं सप्तम्यर्थविद्यमानत्वमस्-धातोरर्थ आश्रयत्वमाख्यातार्थस्तथा च भूतलनिरूपितत्वविद्यमानत्वाश्रयत्वाभाववानेको घट इति बोधे आख्यातोपस्थाप्यैकत्वस्य घटेऽन्वये न तद्वाक्यस्य योग्यत्वं घटो नास्तीत्यत्र विद्यमानत्वाश्रयत्वाभाववति घटद्वयेऽस्तीत्येक- वचनोपपत्त्यैकत्वस्य बाधेनायोग्यत्वं न चाख्यातार्थस्य निषेधेऽन्वयो न दृष्टचर इति वाच्यम्। न पचन्ति चैत्र इत्यादावेव निषेधाख्यातार्थकृतेरन्वयस्य दृष्टत्वात्।

ननु तत्र घटस्य भावनान्वयित्वाभावेन भावनान्वय्यभावप्रतियोगित्वाभावेन च कथमाख्यातोपस्थाप्यसंख्यान्वय इति चेन्न। यः साक्षात्परम्परासाधारण- भावनाविशेष्यस्तन्निष्ठ- विशेष्यतासम्बन्धेन प्रथमान्तपद- जन्योपस्थितेराख्यातार्थ- संख्यान्वयबोधे कारणत्वस्वीकारेण तत्र घटस्य साक्षाद्भावना- विशेष्यत्वाभावेऽपि स्वाश्रयाश्रयत्वसम्बन्धेन भावनाविशेष्यत्वात्तत्र संख्यान्वयानुपपत्तेरभावात् न चैवमपि द्वित्व-बहुत्वावच्छेदेन भूतलनिरूपित-विद्यमानत्वाश्रयत्वाभावस्यान्वये एकघटवति भूतले घटौ न स्त इति तस्मात् घटवृत्तिद्वित्वसामानाधिकरण्येन तादृशनञर्थान्वये तु घटद्वयवत्यपिघटौ न स्त इति स्यादधिकरणान्तरीयद्वित्वे भूतलास्तित्वाभावादिति वाच्यं घटवृत्ति-द्वित्वत्वावच्छेदे नञर्थ-सामाधिकरण्यान्वयादधिकरणान्तरीय-द्वित्वे नञर्थ-सामानाधिकरण्येऽप्येतद्भूतलवृत्ति- घटवृत्तिद्वित्वभूतलास्तित्वाभाव- सामानाधिकरण्याभावान्यघटद्वयवति घटौ न स्त इत्यापत्तिरिति ।

ननु भूतले घटो नास्तीत्यत्रानुपयोगिवृत्तित्वाभावस्य प्रतियोगिन्यन्वयस्वीकारे जातौ समाना स्त्रीत्यत्र जातिनिरूपित- वृत्तित्वाश्रयत्वाभाववती सत्ता इत्यन्वयबोधो वक्तव्यः। स च न सम्भवति जातिनिरूपितैकार्थ- समवायावच्छिन्नवृत्तित्वस्य सत्तायां सत्त्वेन तदभाव- बोधनासम्भवाज्जाति- समवेतत्वस्य चाप्रसिद्धा निषेद्धुमशक्यत्वादिति चेन्न। भूतले घटो नास्तीत्यत्र भूतलवृत्तिघटाभावोऽस्तित्वाश्रय इति बोधस्वीकर्तृमते जातौ न सत्तेत्यत्र जातिवृत्तिसताभाव इत्युपपत्तावपि जातिर्न सत्तावृत्तिरित्यत्र सम्बन्धसामान्यावच्छिन्न-सत्तावृत्तित्वाभावस्य जातावसम्भवेन -समवाय- सम्बन्धावच्छिन्न-सत्तावृत्तित्वस्य चाप्रसिद्ध्या निषेधासम्भवेन तत्पूर्वपक्षस्य तुल्यत्वात् ननु जातिर्न सत्तावृत्तिरिति वाक्यमयोग्यमेव वृत्तिपदं वा साक्षात्-सम्बन्धावच्छिन्न-वृत्तित्वाभावः प्रतीयते। सत्तानिरूपित -साक्षात्- सम्बन्धावच्छिन्न-वृत्तित्वं च स्वरूप-सम्बन्धमादाय प्रमेयत्वादौ प्रसिद्धमिति नोक्तदोष इति चेन्न। जातौ सत्ता नास्तीत्यपि वाक्यमयोग्यमेवेत्यस्यास्-धातोः साक्षात्-सम्बन्धावच्छिन्न-वृत्तित्वे लक्षणा- स्वीकारेण तत्र जातिनिरूपित-साक्षात्-सम्बन्धावच्छिन्न -वृत्तित्वाश्रयत्वाभाववती सत्तेति बोध इत्यस्य वा अनुयोगिवृत्तित्वाभावस्य प्रतियोगिन्यन्वय इति स्वीकर्त्रा मयापि वक्तुं शक्यत्वादिति दिक्।

क्रियाया विशेष्यत्वे प्रयाति पुरुषस्तस्य चरणावभिवादय इत्यादौ तच्छब्देन पुरुषपरामर्शो न स्यादित्याशङ्क्य पटोलपत्रं पित्तं पित्तघ्नं नाडी तस्य कफापहा इत्यादिप्रयोगदर्शनात्तच्छब्देन विशेषणस्यापि परामर्श इति यत्समाहितं तदयुक्तं तत्र तच्छब्देन विशेषणस्यापि परामर्श इति सत्यं परन्तु यावत्कालं तच्छब्दस्य प्रधानपरामर्शित्वं तावत्कालं विशेषणपरामर्शित्वं नोचितमिति प्रयाति पुरुष इत्यादौ प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे तस्येति तच्छब्देन प्रधानीभूतस्यैव पुरुषस्य परामर्श इति तथैव स्वीकारादित्यभिप्रेत्याह – **क्वचिद्विशेष्यस्य क्वचिद्विशेषणस्य परामर्शादित्यादि**। क्वचित् प्रयाति पुरुष इत्यादौ क्वचिद्विशेषणस्य पटोलपत्रं पित्तघ्नमित्यादौ विशेषणस्य पटोलस्य। ननु तच्छब्दस्य

घटोऽयं तज्जातिरित्यादौ तच्छब्देन घटपरामर्शः स्यादित्यत आह – **परन्त्विति।** पदार्थतावच्छेदकरूपविशेषणस्य पदशक्यतावच्छेदकरूपविशेषणस्य नातः पटोलपत्रमित्यादौ पटोलादिपदस्य पटोलादिसम्बन्धिनि लक्षणास्वीकारे पटोलादेः पदार्थतावच्छेदकत्वेऽपि तत्परामर्शानुपपत्तिरिति भावः। स्वबल्लक्षणत्वव्यापकाविघात-तत्प्रयुक्त-दृश्याश्रयकाल- पूर्वत्वाभावक- **शुद्धचिज्ज्ञान-निरस्तविपरीतभावनीभूत-श्रीमदुदयसिंह- प्रभुवर्य्य-लब्धजीवक-हरियशोमिश्र-निर्मित-वाक्यदीपिका समाप्तिमगमत्।**

---

1. संख्याप्रकारकान्वयबोध - ग
2. ख drops च
3. क, ग do not mention author's name as available in ख - महामहोपाध्याय-मैथिल-श्रीवंशमणिशर्म-प्रणीतो वाक्यवादस्समाप्तः
4. क adds लिखितो रामदत्तेन स्वपठनार्थम्। श्रीः ; ख adds श्रीमहादेवाय नमः after वाक्यवादस्समाप्तः

**T1 : *Atha Kimidaṃ vākyaṃ nāma. Ekatiṅ vākyamiti Bhāṣyāt. Ekatiṅantārthamukhyaviśeṣyaka-bodhajanakapadasamūho vākyamiti Vaiyākaraṇāḥ. Tena pacati bhavatītyādau[1], Paśya mṛgo dhāvatītyādau ca kriyāpadasyānekatve'pi naikavākyatāvyāghātaḥ. Nahi kriyā-vinirmukta- vākyamastīti Bhāṣyāt 'Astirbhavatiparaḥ Prathamapuruṣa' iti Kātyāyanasmaraṇācca sarvatra samucitaḥ kriyāpadādhyāhāraḥ.**

---

**T1.**** Suptiṅantacayo vākyamiti pramāṇānusāreṇa subantacayatve sati tiṅantacayatvasya militasya pratyekaṃ vā[2] subantacayatvādervākyalakṣaṇatve parasparamavyāptiḥ. Padasamūhamityasya gauraśvaḥ puruṣo hastītyādāvativyāptir ityāśayena pṛcchati - **Atheti** padaṃ lokaprāptisiddhaṃ vākyaṃ vākyapadavācyaṃ kiṃ jijñāsitam. Tathā ca loke prasiddhaṃ[3] vākyapadavācyaṃ jijñāsāviṣayībhūtamityanvayabodhaḥ. **Nāmeti** vākyālaṅkāre. **Ekatiṅ vākyamiti Bhāṣyāditi**. Ekatve sati tiṅtvaṃ vākyatvamityukte pacatītyasyāpi vākyatvāpattiḥ. Ekatiṅ yasminniti bahuvrīhyāśrayeṇa ekatiṅghaṭitapadasamudāyatve vākyatvamiti Paryavasannaṃ pacati-bhavatītyādāvavyāptamityāśayena tadarthamāha : **Eketi. Teneti**. Etādṛśārthakaraṇena anvayaścāsya Naikavākyatāvyāghātaḥ ityatra tanniṣedhe[4] pacati bhavatītyatra viklittyanukūlaikāśraya- Vṛttibhāvanā-bhinnaikāśrayaka- bhavanānukūlā bhāvaneti bodhaḥ[5].

---

1. Gha misses one folio from here
2. Ga omits *Vā*
3. *Lokaprasiddhavākyapadavācyaṃ* - Ga
4. *Ityatretyavadheyam* - Gha
5. *Bhāvanā* - Ga

* *Oṃ Śrīgaṇeśāya Namaḥ* - Ka

** *Oṃ Śrīrāmacandrāya Namaḥ* - Ga; *Śrībhāratīmukhyaprāṇāntargata-Śrīrāghavendragurvantargataśrīlakṣmīveṅkaṭeśāya Namaḥ* - Gha

**T2. Na cāstu kriyāpadādhyāhārastathāpi bodhaviśeṣyatvaṃ prathamāntārthasyaiveti vācyam. 'Paśya mṛgo dhāvatī'tyādāvagateḥ prathamāntārthasya viśeṣyatve vākyabhedaprasaṅgāt. Mṛgasya darśanakriyāyāṃ karmatayā'nvaye mṛgapadottaraṃ dvitīyāpatteḥ. Dvitīyāyāṃ satyāṃ 'Laṭaḥ śatṛśānacāvaprathamāsamānādhikaraṇa' ityanuśāsanāllaṭaḥ śatrādeśe 'Dhāvantaṃ mṛgaṃ paśye'tyevaṃ syāt. Tathā ca 'Paśya mṛgo dhāvati' iti vākyocchedāpattestamityadhyāhāre vākyabhedo gauravañca.**

---

**T2.** Paśya mṛgo dhāvatītyatra mṛgābhinnaikāśrayavṛttyuttaradeśa-saṃyogānukūlavega-janyavilakṣaṇavyāpārakarmakacākṣuṣānukūla-vyāpārastvadabhinnaikāśraya-vṛttirityanvaya-bodhaḥ. Naikavākyateti tiṅantabheda-Prayuktāneka-vākyatāpattirnetyarthaḥ.Nanu kriyāvinirmuktavākyasyāpi sattvena tatra tallakṣaṇāvyāptirityāśaṅkya tadvākya-Pramāṇāviruddha-tvenāvyāptyābhāvādityāha : **Nahītyādinā.** Nanu prayāti puruṣastasya caraṇāvabhivādaye' ityādau tacchabdena Puruṣa-Parāmarśānurodhāt prathamāntārthasyaiva bodha (dhe) mukhyaviśeṣyatva-svīkāreṇa Nirukta- lakṣaṇamaprayuktamityāśayena śaṅkate : Astvityādinā samādhatte - **'Paśya mṛgo dhāvatī'yādinā.**[1]

Nanu paśyetyādau prathamāntārthaka mukhyaviśeṣyaka-bodhasvīkāre'pi tamiti padādhyāhāreṇa dhāvanānukūlakūtimān mṛgoktakarmaka-darśanāśrayastvamiti bodho na svīkriyate yena nānāmukhyaviśeṣyatāka-bodhajanakatve na vākyabhedaḥ syādapi tu dhāvanānukūla-kṛtimān mṛganiṣṭha-karmatānirūpitadarśanāśrayas tvamityeva bodhas tajjanakatayaika-vākyatvakṣaterabhāvāt kathamagatis-tatretyāśaṅkya mṛga-padārthasya darśane karmatā-sambandhenānvaya-bodhasya nāmārthasya dhātvarthe 'bhedātirikta-sambandhenānvaya-bodhasvīkāre 'Taṇḍulaḥ Pacatī'tyādiprayoga- sādhutvāpattyā nāmārthaprakārakabhedasaṃsargakabodhe vibhakti-janyopasthiteḥ kāraṇatvenānupapannatvāt mṛgapadārthasya karmatā-bodhārthaṃ mṛgapadottaraṃ dvitīyāvaśyakītyāśayenāha - **Mṛgasyetyādi.** Tatra phalitamāha : **dvitīyāyāñcetyādi. Dhāvantaṃ mṛgaṃ paśyetyevaṃ syādityantena.** Nanu tathā prayogo bhavatyeveti na doṣa ityāśaṅkya 'Dhāvantaṃ mṛgaṃ paśye'tyevaṃ syāt. Na tu paśya mṛgo dhāvatīti prayogastathā ca tasyoccheda evāniṣṭakara ityāha tathā ceti.

---

1. Here two characters (*dinā*) are worm-eaten in Ga Ms. The text of Gha is not available as one folio is missing in between

**T3 . Na ca vākyabhede kṣativiraha iti vācyam. Tathā sati 'Tiṅatiṅaḥ' (Pā. 8.1.28) sūtre atiṅaḥ ityasya vyāvartyābhāvena vaiyarthyāpatteḥ, nighātasvarasya caikavākyatvādhīnatvāt. Ekavākyatvābhāve tadanupapatter nanu 'Hareradaśāvatārāḥ' ityatra kā kriyā'dhyāhāryā bhavantītyeveti.* Parantu yatrāyogyatā na tatra laḍarthavartamānatvānvayaḥ. Avivakṣitatvāt vartamāna-sāmīpye vā laṭ-sāmīpyaṃ ca bhūtabhaviṣyadrūpam, ata eva 'Jayanti Kṛṣṇasya daśāvatārāḥ' iti Mukuṭaḥ 'Vāridastṛptimāpnoti Sukhamakṣayamannada' ityādau na laḍarthavartamānavivakṣeti Miśraḥ. Vartamānārthaka-laṭ-pratyayāntatvenetyasyālokasya tatsāmīpyārthaka-laṭ-Pratyayāntatveneti Kaṇṭakoddhāre Madhusūdanaṭhakkurāḥ. Atra Naiyāyikāḥ niṣkriyasyāpi vākyasya sattvāt trividhaṃ vākyaṃ, tathā hi subantasamūhastiṅantasamūhaḥ subanta-tiṅantasamūhaśca. Yathā 'Trayaḥ kālāḥ,' 'Pacati bhavati' 'Caitraḥ pacatī'tyādau 'Dhāvanakartṛka-mṛgakarmaka- darśanāśrayastvam ityanvayabodhāt vākyārthasya karmatāsaṃsargeṇa darśanakriyāyāṃ vākyasya cārthavattvābhāvenāprātipadikatvānna dvitīyāpattiḥ na ca vākyabhedaprasaṅgaḥ.**

---

**T3.** Nanu tatra mṛgamukhyaviśeṣyatākatvaṃ padārthamukhya-viśeṣyatākabodha eva svīkriyate tamityadhyāhāreṇa tathā ca na tasyoccheda ityata āha - Tamityadhyāhāra ityādivākyabhede iṣṭāpattimāśaṅkya tāṃ pariharati : **Na ceti.** Tathā sati vākyabhede sati atiṅantātparaṃ tiṅantaṃ nihanyate iti Tiṅatiṅaḥ' (Pā. 8.1.28) iti sūtrārthaḥ. Na tvekavākyatābhāve'pi tiṅantātparasyātiṅa iti grahaṇavyāvartyātva-sambhava ityāśaṅkya samānavākye nighāta-yuṣmadasmadādeśā vaktavyā iti vacanena tiṅantena saha tiṅantasyaikavākyatāyāmevātiṅa iti grahaṇābhāve nighāta-praśaktistadvāraṇāya sūtre tadgrahaṇaṃ satyekavākyatvābhāve nighātapraśa(sa) ktireva netyāha nighāta-svarasya cetyādi ekavākyatvābhāvo tiṅantena saha tiṅantasyaikavākyatvābhāve tadanupapatteḥ tiṅantātparasya nighāta-praśa(sa)ktyanupapattestathā cātiṅa iti grahaṇasya vaiyarthyamiti bhāvaḥ.

Nanu Harerityādāvavatārāṇāṃ bhūtabhāvitvena kriyādhyāhārābhāvena tatrātallakṣaṇāvyāptirityāśaṅkya laḍarthasya vivakṣitatatvena bhavantītyadhyāhāra

sambhava ityāha - **Bhavantītyevehītyādi*** avivakṣitatvādityantena 'Harisambandhidaśāvatārābhinna-bahutvāvacchinnāśraya- vṛttibhavanānukūlā bhāvaneti bodhaḥ. laḍarthavivakṣayāpi vartamānasāmīpye vartamānavadveti vacanena vartamānasamīpānyataraniṣṭhā tādṛśī bhāvaneti bodhaḥ ityāha - **vartamānasāmīpyaṃ vetyādi.** Ata eva laḍarthāvivakṣaṇādeva sāmīpyārthakatvādeva vā. **Jayantīti** kṛṣṇasambandhidaśāvatārābhinna-bahutvāvacchinnāśraya-vṛttivartamānasamīpa- niṣṭhotkarṣānukūlā bhāvaneti bodhaḥ. Ata evetyasya miśrā ityanenāpyanvayaḥ. **Vārida iti**[1] vāridabhinnaikāśraya-vartinī tṛptikarmaka-prāptyanukūlā bhāvanā vartamāna-kālikītyanvayabodha aśrayaṇīyaḥ. Sa ca na sambhavati tadbhāvanāyā bhaviṣyatvāt. Iha loke pānīyadātustṛṣāśānteḥ svayamudapānena vinā'darśanāt tṛptiḥ pāralaukikī vaktavyā'to[2] laḍartho na vivakṣita iti bhāvaḥ. **Ata eveti** Madhusūdanaṭhakkurā ityatrāpyanveti[3]. Atha śabdo nirūpyate cintāmaṇipadasya vyākhyānarūpā lokanāyaka[4]-pakṣadharamiśrakartṛkagranthasya vyākhyā-kaṇṭakoddhāra iti madhusūdanakartṛko grantha iti bodhyam.

'Trayaḥ kālāḥ' ityatra tritvaviśiṣṭābhinnāḥ kālā ityanvayabodhaḥ. Pacatibhavatītyatra pākānukūlakṛtirbhavanāśraya ityanvayabodhaḥ caitraḥ pacatītyatra pākānukūlakṛtimāṃścaitra ityanvayabodhaḥ. Svārthaniṣṭhamukhya-viśeṣyatā- nirūpitaprakāratāśālibodhajanaka- padasamabhivyāhṛ tapadatvarūpasya kiñcitpadārtha- niṣṭhaprakāratānirūpita- svārthaniṣṭha- mukhyaviśeṣyatāśālibodha-janakatatpada[5]-samabhivyāhṛta-padatvarūpasyavākyatvasya paśya mṛgo dhāvatītyādāvapi sattvena tamiti padādhyāhārābhāvādekavākyatvakṣativiraha ityāha - **paśya mṛgo dhāvatītyādāvapīti.** Tasya ekavākyatvasya nanu nāmārthaprakārakabheda-saṃsargakabodhe vibhaktijanyopasthiteḥ kāraṇatvena kathaṃ dhāvato mṛgasyakarmatvāsambandhena dṛśikriyāyāmanvayastatra tajjanyopasthiter abhāvādatastadarthaṃ dvitīyāpekṣitā tathā ca tādṛśavākyoccheda ityāśaṅkya vākyasya prātipadikatvābhāve na tadarthaprakārakabodhasya tajjanyatāvacchedakānāṃ ktāntatvānna dvitīyāpattirityāha - **vākyasya cārthavattvābhāvenetyādi.** Arthavattvābhāvena arthanirūpitaśaktilakṣaṇānyatara-sambandhābhāvenetyarthaḥ. Tathā ca anukūlatāsambandhāvacchinna-dhāvananiṣṭha-prakāratā-nirūpita-viśeṣyatvābhinna-samavāya-sambandhāvacchinna-kṛtiniṣṭha-prakāratānirūpita-viśeṣyatvābhinna-

karmatāsambandhāvacchinna-mṛganiṣṭha-prakāratānirūpita-viśeṣyatvābhinna-nirūpitatva-sambandhāvacchinna-darśananiṣṭha-prakāratānirūpita-viśeṣyatvābhinna-svarūpa-sambandhāvacchinnāśrayatva-niṣṭha-prakāratānirūpitatvaṃ padārthaniṣṭha- mukhyaviśeṣyatā- śālibodhaḥ[6].

-------------

* Gha is again available from here

1. *Vāridastṛptimiti* - Ga
2. Gha omits *ato*
3. *Ityatrāpyanvayaḥ* - Gha
4. *Lokanāmapakṣadharamiśra*..- Gha
5. Ga omits *tat*
6. Ga omits from..Ṣyatvābhinnakarmatā.....up to ......mukhyaviśeṣyatā-śālibodhaḥ

**T4. Kiñca nahi kriyāvinirmuktaṃ vākyamastīti Phaṇino dharaṇībhāravijṛmbhaṇabhaṇatireveti bhāvaḥ. Tathā hi Trayaḥ kālāḥ ityādāviva kriyāvinirmuktasya vākyasya sārvajanīnatvāt na tvatra kāpi kriyā adhyāhartuṃ śakyā. Api ca kriyāyā viśeṣyatve'pi 'Prayāti Puruṣastasya caraṇāvabhivādaye' ityādau tacchabdena puruṣa-parāmarśo na syāttasya viśeṣaṇatvenopasthitatvāt[1]. Anyathā 'Daśaite Rājamātaṅgāstasyaivāmī Turaṅgamāḥ' ityāderapi sādhutvāpatter ityādyanalpaṃ jalpanti sma.**

---

**T4.** Nanu kriyāvinirmuktavākyasya pramāṇaviruddhatvena vākye traividhyamasaṅgatamityāśaṅkyāha : **kiñcetyādi.** Kriyāvinirmuktaṃ vākyameva darśayati - **Tathāhītyādinā**. Sārvajanīnatvāt sarvajanānubhava-siddhatvāt. Nanvatrāpi bhavantīti kriyādhyāhāraḥ kartuṃ śakya eveti cenna. Bhūtabhāvikālayorvartamānabhavanāśrayatvabādhāt. Na ca jayantītyādāviva vartamānasāmīpyārthakatvaṃ laṭ iti vācyam. Vartamānasāmīpyasya[2] bhūtabhaviṣyadrūpasya bhūtabhaviṣyatkālasambandhi-bhavanānvaye'pi vartamānasambandhibhavane tadanvayāsambhavāt. Na ca sāmīpyaṃ vartamānasādhāraṇaṃ nirvaktuṃ śakyam. Yena vartamāna-sambandhino'pi bhavanasya grahaṇaṃ syāt. Na ca laṭo vartamānasāmīpyaṃ vartamānatvaṃ cārtha iti vācyam. Śaktilakṣaṇābhyāmekena sabdena yugapadanekārthāpratīteḥ. Na ca gaṅgāyāṃ ghoṣamatsyau sta ityatra ghoṣamatsyānurodhe na gaṅgāpadena pravāhatīrayorvṛttidvayenopasthitidarśanāllaṭā vartamāna- tatsāmīpyayos tathaivopasthitirastviti vācyam[3]. Yugapadvṛttidvaya-virodha iti prācīnagāthā-virodhādityetadabhipretyāha - **Na hyatretyādi.** Nanu laḍartho'vivakṣita evetyata āha - **Api cetyādi**. Ghaṭo'yaṃ tajjātirityādeḥ prāmāṇyāpattivāraṇāya sarvanāmnāṃ pradhānopasthāpakatvāvaśyakatvam. Tathā ca puruṣābhinnaikāśraya-vṛttiprayāṇānukūlo vyāpāra iti bodhe puruṣasya viśeṣaṇatayā bhāne na tasya caraṇāvityatra tacchabdena parāmarśo na syādataḥ prathamāntārthaka-mukhyaviśeṣyakabodhaeva svīkartavya ityata āha - **Kriyāviśeṣyatve[4] ityādinā.**

--------------------

1. *Viśeṣaṇatve copasthitatvāt* - Ka
2. *Vartamānasāmīpyarthasya* - G
3.....*Stathaivopasthitivācyam* - Ga
4. *Kriyāyā viśeṣyatve* - Ga

**T5. Atredaṃ bhāvayāmaḥ 'Paśya mṛgo dhāvatī'tyatra tādṛśamṛgasya darśanakriyāyāṃ karmatāsaṃsargeṇānvayo na sambhavati nāmārtha-dhātvarthayorabhedātiriktasambandhena sākṣādanvaya bodhasyāvyutpannatvāt. Anyathā 'Taṇḍulaḥ pacatī'tyāderapi sādhutvāpatteḥ. Na ca tatra dhāvanakṛtiviśiṣṭa-mṛgasya vākyārthatvena nāmārthatvasambhavāt noktadoṣa iti vācyam. Tathā sati mṛgapadottaraṃ prathamā'pi na[1] syāttasyāpi prātipadikāśrayatvāt .**

---

**T5.** Anyathā sarvanāmnāṃ viśeṣaṇopasthāpakatve nāmārthaprakāraka-bhedasaṃsargakabodhevibhaktijanyopasthiteḥ kāraṇatvena tādṛśamūgasya karmatayā darśane'nvayāsambhava ityāha - **Paśya mṛgo dhāvatītyatretyādinā**[2]. Dṛśi-dhātu-jñāna-janya- cākṣuṣa- jñānopasthiti-sahakūto yo dhātvākhyāta- prātipadika-janya-gati-viśeṣakūti- mṛgopasthiti-sahakṛta-dhāvati mṛga iti vākyājñāna-janya-dhāvanānukūla-kṛtimān mṛga ityākāraka-bodhastatsamūhakṛtena paśya mṛgodhāvatī'ti vākyajñānena karmatā-sambandhāvacchinna-dhāvana-kṛtyavacchinna- mṛganiṣṭha-prakāratā-nirūpita- cākṣuṣa- jñāna- niṣṭha- viśeṣyatā-śāliśabdasyajananena mṛgādi-pada-janyopasthitiḥ sahakāriṇī. Api tu tādṛśopasthiti-sahakūta-dhāvati mṛga iti samabhivyāhārajanyadhāvanakartṛ mṛgaviṣayakabodhasya sahakāritvamiti tādṛśamūgasya nāmajanyopasthityaviṣayatve na tasya ca karmatayā dhātvarthe'nvaye dhātvarthanāmārthayorabhedātiriktasambandhena bodho'nupapanna iti niyamabhaṅgarūpadoṣo netyabhipretyāha - **Tatra dhāvanetyādinā.** Tathā sati vākyārthasya dhāvanakśtiviśiṣṭamṛgasya karmatayādhātvarthe'nvaye sati prathamāpītyapinā vibhaktisāmānyapratiṣedhaḥ. Mṛgapadottaraṃ kāpi vibhaktir na syādityarthaḥ. Tatra cāpādakamaprātipādikatvāditi pūraṇīyaṃ tasyāpītyādi-granthānurodhāt. Yadyapīdamāpādānamasaṅgatam. Mṛgapadasya dhātu-pratyayāntabhinnatvān mṛgatvāvacchinnasya sattvenārthavattvācca. Aprātipadikatvādityāpādakāsiddheḥ. Tathāpi yādṛśavākyārthasya dhātvarthe'nvayas tādṛśa-vākyottara-vibhakterdarśanena dṛśi[3] dhātvarthānvayinīlābhinna-ghaṭa-karmatvārthaka-nīlaṃ[4] ghaṭamiti vākyottaramiva prakūte'pi dhāvanakūtiviśiṣṭa-mṛgārthakamṛgapadottaraṃ prathamā'pi na syāditi bhāvaḥ.

---

1. *Ka* adds here Vivakṣāsthale eva prayuktasya 'Paśya Mṛgo dhāvatī'tyetasyaikavākyatvaṃ Phaṇisammataṃ taccānupapannameva. Phaṇisammatistu Helārājena spaṣṭīkṛtā. Tathā hi subantaṃ hi yathānekatiṅantasya viśeṣaṇam, Tathā tiṅantamapyāhustiṅantasya viśeṣaṇamiti tena dhāvanakriyāyā which appear in next text in other manuscripts, namely, *Ga* and *Gha*
2. Paśya Mṛgetyādinā - *Gha*
3. Gha omits Dhātvarthe'nvayastādṛśa-vākyottara-vibhakterdarśanena dṛśi
4. *Gha* omits Ghaṭa-karmatvārthaka-nīlaṃ

**T6. Kiñca mṛgakartūkotkaṭadhāvanasya darśanakriyāyāṃ karmatvena vivakṣāsthale eva prayuktasya 'Paśya mṛgo dhāvatī'tyetasyaika-vākyatvaṃ Phaṇisammatam. Taccānupapannameva. Phaṇisammatistu Helārājena spaṣṭīkṛtā. Tathā hi -**

***Subantaṃ hi yathānekatiṅantasya viśeṣaṇam/***

***Tathā tiṅantamapyāhustiṅantasya viśeṣaṇam//* iti.**

**Tena dhāvanakriyāyā eva[1] vivakṣāyāṃ na pratīkāra ityāśayaḥ. Anyathā 'Dhāvantaṃ mṛgaṃ paśye'tyevaṃ vrūyāt. Kiñca 'Trayaḥ kālāḥ' ityatra 'Jñāyante' iti kriyānvayasambhavāt kriyāvinirmukta-vākyasyāsaṅgatyāpatteḥ. Kiñca 'Śṛṇu garjati megho', 'Naṭo gāyati Śṛṇu', 'Ghaṭo'naśyatpaśye'tyādāvavyāptyāpatteśca. Etena prathamārtho mṛgakarmatvamityapāstam.**

---

**T6.** Nanu yādṛśasāmagrīsattve yatkāryaṃ dṛṣṭaṃ tadeva tatrāpādyam[2]. Nīlaṃ ghaṭaṃ paśyetyatra tādṛśasamabhivyāhārajñānādeva nīlaghaṭakarmatva-nirūpaka-darśanānvayabodhasya dṛṣṭatvena nīlaṃ ghaṭamiti vākyottaraṃ vibhaktirmā bhūt paśya mṛgo dhāvatīti prathamāntapada- samabhivyāhārajñānādeva dhāvanakartṛmṛgakarmakadarśanānvayabodho bhavati. Na tu tadvibhaktivyatirekata iti prathamāpi na syāditi niryuktikamityata āha - **Kiñceti**. Tacca ekavākyatvaṃ ca anupapannameveti. Dhāvanakartṛmṛgakarmaka- darśanāśrayastvamiti bodhasvīkāre phaṇivivakṣitaikavākyatvānupapattiriti bhāvaḥ. Nanu mṛgakartṛkotkaṭadhāvanasya dṛśi-kriyāyāmanvayaḥ. Phaṇitātparyaviṣaya ityeva kuto'vagamyata ityāśaṅkya vyākhyānato viśeṣapratipattirnahi sandehādalakṣaṇamityabhiprāyeṇa Bhāṣyārthaspaṣṭīkartṛhelārājasammatimāha - **Phaṇisammatistviti.** Tena mṛga iti subantadarśane viśeṣaṇaṃ na mṛgakartṛkotkaṭadhāvanaṃ darśane viśeṣaṇamiti Helārājena spaṣṭīkaraṇena evakārottaraṃ karmatayā dṛśikriyāyāmanvayasyeti śeṣaḥ. Vivakṣāyāmityanantaraṃ prayuktasya paśya mṛgo dhāvatīti vākyasyeti śeṣaḥ. Na pratikāraḥ. Na nirākaraṇam. Tathā ca tādṛśamṛgasya karmatayā tatrānvayasvīkāre phaṇisammatavākyatvānupapattireva doṣa iti bhāvaḥ. Nanu prakṛtipratyayau sahārthaṃ vrūtastayoḥ pratyayārthasya prādhānyamiti niyamāt.

Dhātvarthaniṣṭhaprakāratānirūpita-viśeṣyāsambandhenānvayabuddhiṃ prati viśeṣyatayā pratyayajanyopasthitirheturiti kāryakāraṇabhāvena darśane pratyayajanyopasthitirabhāvena dhāvanasya tatrānvayo na sambhavatīti mṛgasyaiva tatrānvayena tārkikapakṣa eva samīcīna iti cenna. Nirukta-niyamādeva prakṛtyarthaprakārakabodhe[3] viśeṣyatayā pratyaya-janyopasthiteḥ[4] kāraṇatvena karmatvopasthityarthaṃ dvitīyāpekṣā. Tathā ca paśya mṛgo dhāvatīti vākyo cchedāpatterityāha - **Anyatheti**. karmatvopasthityarthaṃ dvitīyāsvīkāre iti tadarthastathā ca subantasthala eva tādṛśanyāyaścaritārthaḥ. Tiṅantasthale dhātvarthaviśeṣyakānvayabodha eva svīkaraṇīya iti. Laḍarthavivakṣāyāmapi bhūtabhaviṣyadvartamānaviṣayakajñāne vartamānakālikatvānvayasambhavena kriyāvinirmuktaṃ vākyamasaṅgatamityāha - **Kiñceti.** Prathamāntārthaka-mukhyaviśeṣyakabodhasvīkāre doṣāntaramāha - **Kiñceti.** śṛṇu garjati megha ityatra garjanāśrayameghakarmakaśravaṇāśrayastvamiti Naiyāyikamate bodhaḥ. Sa ca na sambhavati śabdasyaiva śrāvyatvena meghasyāśrāvyatvāt. Meghābhinnaikāśraya-vṛttigarjana[5]- karmakaśrāvaṇaṃ tvadabhinnaikāśrayakamiti vaiyākaraṇamate bodhaḥ. Sa ca samīcīna eva. Naṭo gāyati śṛṇvityatra gānāśrayanaṭakarmaka-śrāvaṇāśrayastvamiti tārkikamate bodhaḥ. Sa ca na sambhavati naṭasyāśrāvyatvāt. Naṭābhinnaikāśrayavṛtti-gānakarmakaśravaṇaṃ tvadabhinnaikāśrayakamiti vaiyākaraṇamate bodhaḥ. Sa ca yathārtha eva ghaṭo 'naśyatpaśyetyatra cātītotpattikanāśapratiyogighaṭakarmaka-darśanāśrayastvamiti nyāyamate bodhaḥ. Sa ca na sambhavati ghaṭasya naṣṭatve na taddarśanāsambhavāt. Paṭābhinnaika-pratiyogikātītotpattika- nāśaviṣayakadarśanaṃ tvadabhinnaikāśrayakamiti vaiyākaraṇamate bodhaḥ. Sa ca pramaiva. tathā ca nyāyamate tatra tatrāvyāptireveti bhāvaḥ. etena śṛṇu garjatītyāderayogyatāpādānena prathamārtha iti. tathā ca paśya mṛgo dhāvatītyatra prathamāntārthamukhyaviśeṣyaka- bodhasvīkāre'pi[6]nāmārtha-dhātvarthayor abhedātiriktasambandhenānvayabodho'vyutpanna iti niyamabhaṅgo nāsti. Dhāvanakartṛmṛganiṣṭhaprathamārthaviṣayatānirūpaka- darśanāśrayas tvamityākārakānvayabodha- svīkāreṇa karmatāsambandhena dhāvanakartṛmṛgasya darśanakriyāyāmananvayāditi bhāvaḥ.

Nanu kriyāmukhyaviśeṣyakānvayabodhasvīkāre prayāti puruṣastasya

caraṇāvabhivādaye' ityādau tacchabdena puruṣa-parāmarśo na syāt. Prathamāntārthasya puruṣasyākhyātārthaviśeṣaṇatvena mukhya-viśeṣyatvābhāvāt.

-------------------

1. Ka omits *eva*
2. *Tatrāpāyam* - Ga
3. *Bodhaviśeṣyatayā* - Gha
4. *Pratyayajanyopasthitiḥ* - Gha
5. *Gāna* for *garjana* - Gha
6. *Svīkāre'pi* - Ga

**T7. Kiñcaivaṃ mṛge saṅkhyānvayo na syāt, ākhyātopasthāpya-saṅkhyāprakārakānvayabodhaṃ prati mukhyaviśeṣyatayā prathamāntapada- janyopasthiterhetutvāt. Anyathā 'Haṃsīva Dhavalā kīrti'rityatra haṃsyāmapi saṅkhyānvayaprasaṅgaḥ. Mṛge saṅkhyānvaye iṣṭāpattau ca 'Paśya Mṛgā dhāvati'[1] ityāderapi sādhutvāpatteḥ. Kiñca 'Paṭolapatraṃ pitaghnaṃ nāḍī tasya kaphāpahā' iti, 'Caitro grāmaṃ *gatastatra Maitraḥ kiṃ kurute'dhunā' ityādiprayogadarśanāt[2]. 'Tacchabdena viśeṣaṇasyāpi parāmarśaḥ. Parantu padārthatāvacchedaka-rūpaviśeṣaṇasya kvacinna parāmarśastena 'Daśaite Rājamātaṅgāḥ' ityādau na kāpyanupapattirata** evotsargo'yaṃ na niyamastaduktaṃ 'Sarvanāmnāmutsargataḥ pradhāna-parāmarśitvami'ti dik.**

---

T7. Ghaṭo'yaṃ tajjātirityādeḥ prāmāṇyāpattivāraṇāya tacchabdasyākhyāta-viśeṣyopasthāpakatvasvīkārādataḥ prathamāntārthakamukhya- viśeṣyakabodha eva svīkartavya ityata āha : **Kiñceti.** Evaṃ dhāvanakartṛka- mṛgakarmaka-darśanāśrayastvamiti prathamāntārthamukhyaviśeṣyaka- bodhasvīkāre kutaḥ saṅkhyānvayastatra na syādityata āha - **ākhyātopasthāpyetyādi**. Tatrāyamabhiprāyas tārkikamate kṛte ākhyātārthatayā karturanabhidhānāddevadattena pacatītyādi-prayogāpatti-vāraṇāyākhyātārtha-bhāvanānvayyanvayi- saṅkhyāyāmanabhihitāyām ityasya kartṛkaraṇayostṛtīyetyanabhihitādhikārīyasūtrārthatvena svīkāreṇākhyātokte kartari[3] karmaṇi ca taduktasaṅkhyānvaya iti vaktumaśakyatvena viśeṣyatayākhyātopasthāpyasaṅkhyā-prakārakānvayabodhaṃ prati prathamāntapada-janyopasthitiritaraviśeṣaṇatva-tātparyāviṣayībhūtārtha-niṣṭhaviśeṣyatālakṣaṇa-mukhyaviśeṣyatāsambandhena heturiti svīkaṇīyam.

Tathā ca paśya mṛgo dhāvatītyatra mṛge itaraviśeṣaṇatva-tātparyaviṣayībhūtārthatvena niruktasambandhena tadupasthiterabhāvānmṛga-saṅkhyānvayānupapattirdoṣa iti. Nanu vaiyākaraṇamate'pi mṛgasyābheda-sambandhena tiṅarthaviśeṣaṇatvena tadupasthāpyasaṅkhyānvayaḥ kathamiti cenna, tanmate tathā kāryakāraṇabhāvānaṅgīkārāt tanmate kīdṛśakāryakāraṇabhāva iti cedetthaṃ :

phalavyāpārayordhāturāśraye tu tiṅaḥ smṛtāḥ.
Phale pradhānaṃ vyāpārastiṅarthastu viśeṣaṇam..

Ityatra phalaṃ[4] viklittyādi vyāpārastu bhāvanābhidhāsādhyatvenābhidhīyamānā kriyā dhātvarthaṃ nirūpya tiṅartham āha - **āśraye tviti.** Phalāśraye vyāpārāśraye cetyarthaḥ[5]. Phalāśrayaḥ[6] karmavyāpārāśrayaḥ kartā tatra phalavyāpārayor dhātulabhyatvānna tiṅastadaṃśe śaktiḥ. Padārthaṃ nirūpya vākyārthaṃ nirūpayati : **Phale ityādi.** Viklityādiphalaṃ prati vyāpāraḥ pradhānaṃ viśeṣyamityarthaḥ. Tiṅarthāḥ kartṛ-karmasaṅkhyākālāstatra kartā vyāpāre viśeṣaṇaṃ karma tatphale viśeṣaṇaṃ saṅkhyākartṛpratyaye kartari karmapratyaye karmaṇi viśeṣaṇaṃ kālastu vyāpāre viśeṣaṇaṃ na tu saṅkhyāvatkartṛkarmaṇoḥ. Atītabhāvanāke kartari pacatītyāpatteḥ. Nāpi phale phalānutpattidaśāyāṃ vyāpārasattve pacatītyanāpattestathā cākhyātopasthāpya-saṅkhyāprakārakabodhaṃ pratyākhyātajanyakartṛkarmopasthitir heturiti kāryakāraṇabhāvaḥ phalitaḥ.

Evaṃ ca[7] caitrastaṇḍulaṃ pacatītyatra caitrābhinnaikakartṛkastaṇḍulabhūta-karmaniṣṭhaviklittyanukulavartamānakāliko vyāpāra iti bodhaścaitreṇa taṇḍulaḥ pacyate ityatra taṇḍulābhinnaikakarma-niṣṭhaviklittyanukula-vartamānakālikacaitrakartṛko vyāpāra iti bodhaḥ. itthaṃ ca prakṛte mṛgo dhāvatītyatra mṛgābhinne kartari tadupasthiteḥ sattvena na tatra saṅkhyānvayānupapattiriti bhāvaḥ. nanu mukhyetyaniveśya prathamāntapada-janyopasthiterhetutvasvīkārānna saṅkhyānvayānupapattirityata āha Anyatheti. Mukhyaviśeṣyatāsambandhena tādṛśopasthiterhetutvānaṅgīkāre iti tadarthaḥ. tathā ca tārkikamate tatra saṅkhyānvayānupapattireva saṅkhyānanvaye iṣṭāpattiṃ vārayati[8] - **Mṛge ityādisādhutvāpattirityanena.**

Nanu prayāti puruṣastasyetyatra tacchabdena puruṣaparāmarśo na syāditi dūṣaṇaṃ tu vartata eva iti cenna tacchabdasya viśeṣaṇopasthāpakatvasyāpi[9] kutraciddṛṣṭaṃ tena viśeṣaṇībhūtasyāpi puruṣasya tacchabdena parāmarśasambhavād ityāha kiñceti. Nanu tarhi ghaṭo'yaṃ tajjātirityādāvapi prāmāṇyaṃ syāttatrāpi tatpadena ghaṭatvaparāmarśasambhavādityata āha - **Parantviti. Na parāmarśa iti.** Padopasthitiprakārasya tatpadena parāmarśāsambhave'pi tadbhinnaviśeṣaṇasya tatpadena parāmarśe bādhakābhāvāditi bhāvaḥ.

Anyathā daśaite ityādau tasyaiveti tacchabdena rājaparāmarśe bādhakābhāve na tatsādhutvāpatterityatreṣṭāpattimāha - **Teneti.** Padopasthitiprakārabhinnasya viśeṣaṇasyāpi parāmarśasambhaveneti tadarthaḥ. Nanu padārthatāvacchedakasya tatpadena parāmarśo nāstītyuktam. Tarhi daśaite rājamātaṅgā ityatra rājapadasya

rājasambandhilākṣaṇikatayā rājñaḥ padārthatāvacchedakatvāt tatpade tasya katham parāmarśa iti cettarhi paṭolapatram pitaghnamityatrāpi paṭolapadasya paṭolasambandhilākṣaṇikatayā paṭolasya padārthatāvacchedakatvena tasyeti tacchabdena parāmarśānupapattiḥ. Na ca tatra vigraha-samāsayoḥ samānārthakatvānurodhena ṣaṣṭhītatpuruṣe pūrvapada-lakṣaṇāyāḥ asvīkāreṇa paṭolapadasya paṭolamātraparatayā padārthatvāvacchedakatvābhāvāt tacchabdena parāmarśaḥ sambhavatīti vācyam. Prakṛterapi rājapadasya rājamātraparatayā padārthatvāvacchedakatvābhāvena tacchabdena parāmarśasambhavāt.

Nanu paṭolasya patramiti vigrahavākyāt paṭolasambandhaprakārakabodho jñāyate. Paṭolasya patramiti samāsāt tatra lakṣaṇā'svīkāre paṭolaprakārakabodho[10] jāyate. Tathā ca vigrahavākyasamāsavākyayoḥ samānaprakārakabodha-janakatvarūpa- samānārthakatva- bhaṅgāpattis tadvāraṇāya paṭolapadasya paṭolasambandhe lakṣaṇā. Evaṃ ca paṭolasya padārthatāvacchedakatvena tasyeti tatpadena parāmarśo na syāt. Na ca paṭolasambandhaḥ patramiti vatpaṭolapatramityādāvapi paṭolapadārthānanvayāpattirnāmārthayoriti vyutpatteriti vācyam. Ghaṭaḥ paṭo na, caitra iva maitro gacchatītyādau nañarthe paṭapadārthasya pratiyogitvasambandhena ivārthe caitrapadārthasya svanirūpitatvasambandhenānvayabodhasvīkāreṇa nipātātiriktanāmārthasyābhedātiriktasambandhena śābdavodho'vyutpanna iti niyamasaṅkocavat samastanipātātirikta-nāmārthasyābhedātirikta-sambandhenānvayabodho'vyutpanna iti niyamasaṅkocasvīkārāt. Na ca nipātasthale vyutpattisaṅkoce'nubhavo mānam. Samāsasthale vyutpattisaṅkoce mānābhāva iti vācyam. Atrāpi vyutpattisaṅkoce vigrahasamāsayoḥ samānārthakatvapravādasyaiva mūlatvāt. Tasmāt paṭolapadasya paṭolasambandhe lakṣaṇāsvīkāreṇa paṭolapadasya padārthatāvacchedakatayā tasyeti tatpadena parāmarśānupapattirvartata eveti cenna, ghaṭamānayetyatra karmatāsambandhenānayanopari[11] ghaṭo'pyanvetītyekadeśimate svīkāreṇa paṭolasya patramityatra paṭolasambandhaprakārakabodha iva paṭolaprakārakapatra-viśeṣyako'pyanvayabodho bhavati.

Tathā ca vigrahasamāsayoḥ paṭolaprakāraka-patraviśeṣyaka-bodhasyaiva

svīkāreṇa paṭolapatramityādau paṭolādipadasya lakṣaṇābhāvena paṭolasya padārthatāvacchedakatvābhāvena tasyeti tatpadena tatparāmarśānupapatterabhāvāt. Evaṃ ca 'daśaite rājamātaṅgāḥ' ityādau tasyaiveti tatpadena rājñaḥ padārthatāvacchedakatvābhāvena parāmarśaḥ sambhavatīti bhāvaḥ. Athavā paṭolasya patraṃ rājño mātaṅgā ityādi-vyāsasthale yathā prakṛtyarthānvita-ṣaṣṭhyarthaprakārakabodho jāyate tathā paṭolapatraṃ daśaite[12] rājamātaṅgāḥ ityādāvapi luptaṣaṣṭhīsmaraṇena paṭolādyanvitasambandhaprakāraka-patrādiviśeṣyaka- bodhasvīkāre'pi nāmārthayorabhedenaivānvaya iti niyamabhaṅgo na. Evaṃ ca paṭolādeḥ padārthatāvacchedakābhāvena tatpadena parāmarśasambhavaḥ. Vastutastu nāmārthayorabhedenaiveti vyutpatteḥ saṅkoce mānābhāvena luptaṣaṣṭhīsmaraṇasya naiyatyābhāvena ca sambandhini lakṣaṇāyā āvaśyakatve samānaviṣayakabodha-janakatvamityeva vigrahasamāsayoḥ samānārthakatvaṃ na tu samānaprakārakabodhajanakatvarūpaṃ tat. Ārūḍhavānaro vṛkṣa ityatrāruḍho vānaro yamiti vigrahāt yatkarmakārohaṇakartā vānara iti bodhaḥ. samāsācca vānarakartṛkārohaṇakarmībhūto vṛkṣa iti bodhaḥ. Evaṃ prāptodako grāma ityādāvapi tatra prāptamudakaṃ yamiti vigrahāt yatkarmaka prāptikartṛudakamiti bodhaḥ. Samāsāccodakakartṛka-prāptikarmībhūto grāma ityanvayabodhastathā ca tatra tatra bhinnaprakārakabodhasyaivodayena vyabhicārāt. atha bahuvrīheravigrahatayā nāsya vigrahavākyatvam. Citragurityatra[13] citrā gauryasyeti hi samāsārthakathanaṃ na tu vigrahaḥ samasyamānapadair evārthakathanasya vigrahatvāditi cenna. Nahi tatra vigraha eva nāstīti samāsārambhaka-vākyasyaiva vigrahatvāt.*** Kintu bahuvrīhau tasyāsādhutvaṃ samasyamānapadaireva vigrahasyāsādhutvāt. Ata eva bahuvrīhau vigrahasyāsādhutvajñāpanāya tatra nityasamāsatvābhidhānam. Ata evāvigraho'svapadavigraho vā'nityasamāsa iti tallakṣaṇam. Tatra samāsaghaṭakībhūtapadasamānārthakapadāntareṇārtha-pratipattyanukūla-vyāpāro'svapadavigrahaḥ. Nanu rājapuruṣa ityādau rājapadasya sambandhini lakṣaṇāsvīkāre viśeṣaṇa-viśeṣyavācakapadārthayor abhedenānvaya-bodhenābhede karmadhāraya ityanenābhedabodhasthale karmadhāraya-vidhānāt karmadhārayāpattir iti cenna samāsapūrvaviśeṣaṇa-viśeṣyavācaka-padayoḥ samānārthakayor yatrābhedenānvayabodhakatvaṃ tatraiva karmadhāraya-

vidhānāt. evaṃ ca padārthatāvacchedaka-rūpaviśeṣaṇasya śakyatāvacchedakarūpa-viśeṣaṇasyetyarthaḥ. Tena śakyatāvacchedakabhinna-viśeṣaṇasyāpi parāmarśa- sambhavena tathā ca rājamātaṅgā ityādau rājapadasya rājasambandhini lakṣaṇāyāṃ rājñaḥ padārthatāvacchedakatve'pi śakyatāvacchedakatvābhāvānna parāmarśānupapattiriti bhāvaḥ. Na ca vaiyākaraṇamate rājapuruṣa iti samudāyasya rājasambandhipuruṣe śaktireva. Evaṃ ca rājñaḥ śakyatāvacchedakatvena tatra parāmarśo na syāditi vācyam. Śakyatāvacchedakatātparyāptyadhikaraṇarūpaviśeṣaṇasyetyasya tadarthatvena rājñastathā viśeṣaṇatvābhāvāttasyaiveti tatpadena parāmarśānupapatter abhāvāt.

---------------------------

* Kha is available from here

** Gha breaks from here

1. *Paśya dhāvati Mṛgā* - Ga
2. Gha omits *Prayogadarśanāt*
3. Ga repeats *Kartari*
4. Phale - Ga
5. Gha omits Phalāśraye *Vyāpārāśraye*
6. *Phalāśrayaṃ* - Gha
7. *Cayavanti* - Ga
8. *Nivārayati* - Gha
9. *Viśeṣaṇopamyāyakatvasyāpi* - Ga
10. *Paṭolasya prakārakabodho* - Ga
11. ......*Nānayopari* - Gha
12. Gha omits *Daśaite*
13. Ga omits *Citragurityatra*

*** Gha breaks from here

**T8. Vivecittaṃ cedamadhastādavaśiṣṭaṃ[1] copariṣṭāt spaṣṭībhaviṣyati iti Śrīmahāmahopādhyāya- maithilaśrīvaṃśamaṇervimarśaḥ. Athocyate[2] mṛgapadottaraṃ prathamā'pi na syāditi dhāvanakriyāviśiṣṭasya Mṛgasya vākyārthatvena nāmārthatvābhāvātprātipadikāśrayībhūtā[3] Prathamā'pi na syādityarthaḥ. Tathā ca[4] 'Mṛgo dhāvatī'tyākhyātokta-saṅkhyāke kartari nāmārthe prathamā paścāt paśyeti kriyāntare vākyārthatayā'nvaye'pi prāthamikī prātipadikasañjñā kartuṃ śakyeti ko nāma prathamāṃ nivārayitumiṣṭe[5].**

---

**T8.** Ata eva uktasyetatpadena viśeṣaṇasyāpi parāmarśādeva utsarge asati bādhake pravartamāno vidhiḥ sati bādhake kvacittyajyate na niyama iti tacchabdena mukhyasyaiva parāmarśa iti niyamo netyarthaḥ. Tatra sammatimāha -Taduktamityādinā avaśiṣṭavimarśa ityanto granthaḥ spaṣṭaḥ. Evaṃ vaiyākaraṇamatamupanyasya naiyāyikamatavākyārthasya dṛśikriyāyāṃ karmatayānvaye mṛgapadottaraṃ prathamāpi na syādityudbhāvitadūṣaṇam uddhartumupanyasyati - Mṛgapadottaramityādi na syādityartha ityantena naiyāyikamate kṛterākhyātārthatayā karturanabhidhānāddevadattena pacatītyādiprayogāpattivāraṇāya viśeṣyatāsambandhenākhyātopasthāpya-saṅkhyāprakārakānvayabodhaṃ prati prathamāntapadajanyopasthitiritara-viśeṣaṇatvatātparyānvayo bhūtārthaniṣṭha-viśeṣyatāsambandhena heturiti svīkaraṇīyam. Tathā ca mṛgo dhāvatītyatra dhāvanānukūla-kṛtirūpadhāvanānvayi mṛge dhāvatītyākhyātābhihita- saṅkhyā-nvayānurodhena prathamāntapadopasthāpya- tvasyāvaśyakatayā mṛgapadottaraṃ prathamā durnirvāretyāśayenāha - **Tatrocyata ityādinā.**

---

1. *Viveke Cittaṃ Cedadhastādavaśiṣṭaṃ* - Ka
2. Ka, Ga omit *Athocyate*, Kha omits : *Mṛgapadottaraṃ prathamā'pi na syāditi dhāvanakriyāviśiṣṭasya mṛgasya vākyārthatvena nāmārthatvātprātipadikāśrayībhūtā prathamā'pi na syādityarthaḥ. Tathā ca*
3. *Nāmārthatvātprātipadikāśrayībhūtā* - Ka
4. *Tatrocyate* for *Tathā ca* - Ga
5. *Vināśayitumiṣṭa iti* - Ka ; Vināśayitumiṣṭe - Kha

**T9 . Yattu Mṛgakartūkotkaṭadhāvanasyaiva dṛśikriyāyāṃ karmatayānvayaḥ[1] vivakṣita iti Bhāṣyakṛdāśayavarṇanam. Yadapi 'Subantaṃ hi yathānekaṃ tiṅantasya[2] viśeṣaṇaṃ, Tathā Tiṅantamapyāhustiṅantasya Viśeṣaṇa'm iti Helārājasammati-pradarśanaṃ tadubhayaṃ na vicāracāru prakūti-pratyayau sahārthaṃ brūtastayoḥ pratyayārthasya prādhānyamiti[3] niyamāddhātvarthaniṣṭha-prakāratānirūpita- viśeṣyatāsambandhena śābdabuddhitvāvacchinnaṃ prati viśeṣyatayā pratyaya-[4] janyopasthitirheturiti kāryakāraṇa-bhāvādeka[5]- dhātvartha- prakārakāparadhātvartha-viśeṣyakānvayabodha eva na sambhavati. Na caivaṃ '[6]Bhāva-pradhānamākhyātam sattvapradhānāni nāmānī'ti Yāskamuniviśeṣa-vacasākhyātasthale pratyayārthaprādhānyaṃ tyajet iti vācyamākhyātapadaṃ tiṅanteṣveva rūḍhaṃ[7] na tu tiṅanteṣu iti Ākhyātārtheṣu saṅkhyāvartamānatvādiṣu bhāvasyaiva saṅkhyā-kālātiriktākhyātārthasyaiva prādhānyamastīti[8] niyamāt.**

---

**T9.** Yāskaprathamā'nupapattirudāhṛta- bhāṣyakārāśayavirodho Helārājasammati-virodhaśca duṣparisara ityata āha - **Yattviti.** Nanu prakṛti-pratyayau sahārthaṃ brūta ityayaṃ nyāyaḥ - Subantasthala-yava-taṇḍulamityādau dvitīyārthakarmatve prakṛtyartha-taṇḍulaprakārakānvaya- bodhasya viśeṣatā-sambandhe totapādastvatra pratyayabhūta- dvitīyājanyopasthiteḥ sattvāccaritārtha iti tiṅantasthale dhātvarthaviśeṣyakānvayabodha eva svīkaraṇīyaḥ. Bhāvapradhānamākhyātamiti dhātvarthabhāvanā-mukhyaviśeṣyakānvayabādha- tātparyaka-yāskamuni-vacanānurodhādityāśayenāha - **Na cetyādi.** Bhāvapradhānam ākhyātam ityatrākhyātapadaṃ na tiṅante rūḍham. śāstrakāraistatrāprayogātprayoge vā tatra gauṇatvāt tiṅkṣveva śāstrakārāṇāṃ Prasiddhaprayogadarśanāt. dhātvartha-bhāvanāmukhya-viśeṣyakānvayabodha- janakamākhyātāntamiti vacanaṃ bhrāntapralapitamiti manvānaḥ siddhāntī bhāvapradhānamākhyātamityasya saṅkhyākālātiriktākhyātārthasyaiva bhāvanayā tādṛśārtha - viśeṣyakānvayabodhe pratyākhyānaṃ kāraṇamityevaṃvidha-kāryakāraṇabhāvaparatvāt prakṛti-pratyayau sahārthaṃ brūtastayoḥ pratyayārthaḥ pradhānamityasya pratyayārthaviśeṣyaka-śābdabodhaṃ prati pratyayaḥ kāraṇamityevaṃvidhakārya-

kāraṇabhāvaparatayā yāskavacanagatasyākhyātapadasya tiṅ-sup-sādhāraṇarūpeṇa pratyayatvena paryavasānameva yuktam. Taṇḍulaṃ pacatītyādau dvitīyārthakarmatva-viśeṣyakabodhasya pratyayārthabhāvanā-viśeṣyakabodhasya ca darśanād ityāśayavānāha - **Ākhyātapadamiti.**

----------------------------------

1. *Kartaryanvayaḥ* - Ka
2. *Subantasya* - Ka
3. *Pratyayārthaprādhānyamiti* - Ka, Kha
4. *Janyatopasthiti...* Kha
5. Ka, Ga omit *eka*
6. *Sāmarthye sati sattvapradhānāni na pratibhāti* - Kha in place of Bhāvapradhānamākhyātam sattvapradhānāni nāmānī'ti
7. *Nirūḍhaṃ* - Kha
8. *Prādhānyamiti* - Kha

......................................

**T10. Vastutastu prathamāntārtha-Prādhānye'pi Mṛgakartṛkotkaṭa-dhāvanasya karmatā-sambandhena 'dṛśi' kriyāyāṃ viśeṣaṇatayānvayo na virudhyate yato hi viśeṣyānvayinānvayitvamatra viśeṣaṇatvaṃ dhāvanakriyāyā viśeṣyo[1] mṛgastadanvayinī darśanakriyā tadanvayitva-rūpaṃ viśeṣaṇaṃ dhāvanakriyāyā akṣatamiti na Bhāṣyakūduktivirodho, na vā Helārājoktivirodha iti tattvam. Spaṣṭaṃ cedaṃ Mīmāṃsāyāṃ 'Soṣṇīṣā ṛtvijaḥ pracaranti, Lohitoṣṇīṣā ṛtvijaḥ pracarantī'tyādau. Tathā hi pūrvavākye uṣṇīṣāṇāmapīṣṭasādhanatve viśeṣaṇatayānvayaḥ. Tatra viśeṣaṇatvaṃ viśeṣyānvayinānvayitvameva. uṣṇīṣāṇāṃ viśeṣyā ṛtvijastadanvayīṣṭasādhanatvam. 'Tadanvayitvam uṣṇīṣāṇā'miti uttara-vākye tu[2] pūrvalabdhasyoṣṇīṣaviśiṣṭartvik[3]- kartūkapracaraṇasya neṣṭasādhanatve'nvayaḥ kintu lauhityamātrasya tatrāpi paramparayoṣṇīṣadvārā ṛtvik rūpaviśeṣyānvayineṣṭasādhanatvena lauhityānvayasvīkārāt[4] iti.**

---

**T10.** Nanvevamapyutkaṭadhāvanasyaiva dṛśikriyāyāṃ karmatvaṃ phaṇitātparyaviṣayibhūtamiti tanmatavirodha ityata āha - **Vastutastviti.** Nanvevaṃ viśeṣyānvayinānvayitvarūpaṃ viśeṣaṇatvaṃ bhāṣyasammatamapi tūtkaṭa dhāvanasya etādṛśaṃ na kriyāyāṃ viśeṣaṇatvamityāśaṅkya tādṛśaviśeṣaṇatvasyāpi tāntrikaissvīkārādityāśayena tāntrikasammatimāha - **Spaṣṭaṃ cedamiti.** Pārthasārathimiśramate vidhyarthasyeṣṭa-sādhanatva-rūpatvādyajñenetyādisthale yāga iṣṭasādhanamityanvaya- bodhasvīkāreṇa dadhnā juhotītyatra guṇavidhau dadhīṣṭasādhanamityanvayabodho tathā ca prakṛte soṣṇīṣā ṛtvijaḥ pracarantītyatra pracaraṇāṅgabhūtāḥ soṣṇīṣā ṛtvija iṣṭasādhanamityanvayabodhasvīkāreṇa uṣṇīṣaviśiṣṭartijām iṣṭa-sādhanatvānvaye uṣṇīṣasyāpīṣṭasādhanatānvayaḥ.

Evaṃ lohitoṣṇīṣā ityatrāpi pracaraṇāṅgabhūtā lohitoṣṇīṣaviśiṣṭartvija iṣṭasādhanamityanvaya bodhasvīkāre lauhityaviśiṣṭoṣṇīṣasya ṛtvigdvāreṣṭa-sādhanatvānvaye lauhityasyāpīṣṭa- sādhanatvānvaya ityaṅgīkārastathā ca prakṛte'pi dhāvanaviśiṣṭa mṛgasya dṛśikriyākarmatve dhāvanasyāpi dṛśikriyākarmatvaṃ bhāṣyasamtamakṣatameveti bhāvaḥ. Bhaṭṭamate'pi somena yajetetyatra somavatā yāgeneṣṭaṃ bhāvayediti vākyārthasvīkāre

somaviśiṣṭayāgasya bhāvanāyāṃ karaṇatvenānvaye yāgadvārā somasyāpi karaṇatvenānvaye bādhakābhāvena viśeṣyānvayyanvayitvarūpaṃ viśeṣaṇatvaṃ eṣāmapīṣṭamevetyudāhṛtasthaladvaye soṣṇīṣaiḥ ṛtvigbhiḥ pracaraṇaṃ bhāvayet lohitoṣṇīṣaiḥ ṛtvigbhiḥ pracaraṇaṃ bhāvayedityanvayabodha-svīkāreṇa viśeṣaṇībhūtoṣṇīṣasya ṛtvigdvārā lauhityasya coṣṇīṣadvārā bhāvanā-karaṇatvasyeṣṭatvena viśeṣyānvayyanvayitvarūpaṃ viśeṣaṇatvam avyāhatamiti dhāvanasyāpi mṛgadvārā dṛśikriyāyāṃ karmatā-sambandhenānvayitvam avyāhatamiti na virodhaḥ.

Na ca Bhaṭṭamate somena yajetetyādau yāgasyaiva karaṇatvaṃ na tu somasyāpi. anyathā yāgasya somavattvaṃ somena yajeteti vākyāntaraṃ vinā nopapadyata ityarthākṣiptavākyena somena yāgaṃ bhāvayed ityanvayabodha-svīkāro'nupapannaḥ syāditi vācyam. 'Vidhāne vānuvāde vā yāgaḥ karaṇamiṣyate' iti vārtikena dadhnā juhotītyādisthale'pi guṇavidhau dadhimatā homeneṣṭaṃ bhāvayediti vākyārthabodhasvīkārastathā cātrāpi dadhimattvaṃ home dadhnā juhotīti vākyāntaramantareṇa bhāvanāyāṃ karaṇatvenānvaye viśeṣaṇasyāpi karaṇatvenānvaya ityaṅgīkārasyaiva yuktatvāt vākyāntarakalpane gauravāccceti viśeṣyānvayitvarūpaṃ viśeṣaṇatvaṃ mīmāṃsāyāṃ spaṣṭamityabhipretya viśeṣyānvayyanvayitvarūpaṃ viśeṣaṇatvamāha - Tathāhītyādisvīkārādityantena. Tatrāpi itaravākye'pi paramparayā svāśrayāśrayatvasambandhena svaviśeṣyaḥ ṛtvikpadārthaḥ tadanvayinā iṣṭasādhanatvenānvaya iti phalitam.

-------------------------

1. *Dhāvanakriyāviśeṣyo* - Kha
2. *Uttara-Vākyāt* - Ka, Kha
3. *Pūrvasya Labdhoṣṇīṣaviśiṣṭartvik* - Ga
4. *Lauhityasyānvayasvīkārāt* - Ka, Ga

**T11. Yattu 'Dhāvantaṃ mṛgaṃ paśye'tyevaṃ kuryāditi tanna, paryāyaśabdānāṃ prayoge vakturicchāyā eva niyāmakatveneṣṭāpatteḥ. Sarvathā tātparyābhāve[1] 'mṛga'Padaṃ noccārayet. Kintu 'Paśya dhāvatī'tyevaṃ rūpāditi na kā'pyanupapattiḥ[2]. Yattu 'Trayaḥ Kālāḥ' ityatra 'jñāyante' iti kriyādhyāhārasambhavāt[3] kriyāvinirmukta-[4]vākyodāharaṇasyāsaṅgatyāpatteriti tanna jñānakriyānākāṅkṣayoḥ 'Kati kālāstrayaḥ kālā' iti praśnottaravākyayoḥ kriyāvinirmuktatva-sambhavāditi.**

---

**T11.** Nanu dhāvanakartṛmṛgasya dṛśikriyāyāṃ karmatvenānvaye paśya mṛgo dhāvatīti na brūyāt 'dhā vantaṃ mṛgaṃ paśye'tyevaṃ brūyādityāśayenākṣipati yattviti. Nīlaṃ ghaṭaṃ paśya nīlaghaṭaṃ paśyeti vyāsa-samāsayoḥ prayogo vaktṛtātparyasyaiva niyāmakatāyā iṣṭatvāt paśya mṛgo dhāvati 'dhāvantaṃ mṛgaṃ paśyeti prayogadvaividhye'pi vākyārthabhedasya niyāmakatābhāvena vakturicchāyā eva samādhānaṃ karoti tanna, paryāyetyādinā sati vaktustātparye dhāvantaṃ mṛgaṃ paśyetyatrāpi prayoge iṣṭāpatterna paśya mṛgo dhāvatītyasya hānirna hyabhedārthakaparyāyāṇāṃ madhye ekaprayoge satyaparaprayogaḥ kenacinniṣeddhuṃ śakyata iti bhāvaḥ.

Nanu 'dhāvantaṃ mṛgaṃ paśya paśya mṛgo dhāvatītyanayorekatra mṛgānvitakarmatvasyāparatra karmatvasambandhena mṛgasya darśanakriyāyāmanvayavivakṣetyarthabhedo'styeveti dhāvanakriyāyāḥ karmatvena dṛśikriyāyāmanvayavivakṣāyāṃ paśya mṛgo dhāvatītyeva prayogaḥ kartavya ityata āha - Sarvatheti. Na kā'pyanupapattiritidhāvanaviśiṣṭamṛgasya karmatvenānvaye bhāṣyakārādi-vivakṣāvirodho dhāvatītyatra śatrāpattir mṛgapadottaraṃ dvitīyāpattirityeva pādyanupapattiḥ kāpi na syāditi bhāvaḥ. Natvekatiṅantārthamukhyaviśeṣyaka-bodhajanaka-padasamudāyatvaṃ vākyatvamityatra tārkikaistiṅantasamūhaḥ subantasamūhaḥ ityādivākyaṃ tridhā vibhajya trayaḥ kālāḥ' ityādi-krameṇodāhṛtya trayaḥ kālāḥ ityatra tiṅntapadābhāvenāvyāptāvabhihitāyāṃ jñāyanta iti padādhyāhāreṇa tritvaviśiṣṭābhinnakālābhinnāviṣayāśraya-vṛttijñānamityanvayabodha-svīkāreṇa vaiyākaraṇoktavākya-lakṣaṇasyāntarduṣṭatvāt paśya mṛgo dhāvatītyatrāpi kriyāyāḥ karmatayā

dṛśikriyāyāmanvaye'pi bādhakābhāva ityāśaṅkāṃ samādhātumanuvadati - **Yattviti**. 'Trayaḥ kālāḥ jñāyante' ityatra taduktalakṣaṇasyāvyāptyabhāve'pi kati kālā iti praśne trayaḥ kālāḥ ityuttaraṃ dṛśyate. Tatra kriyādhyāhāre prayojanābhāvāttallakṣaṇamavyāptamityāśayenāha - **Tanneti. kriyāvinirmuktatva-sambhavāditi.**

Na ca kati kālāḥ, trayaḥ kālāḥ iti praśnottaravākyayorapi bhavanti jñāyanta iti padādhyāhārasambhavānnokta- lakṣaṇamavyāptamiti vācyam. Kati kālāḥ iti kālatvavyāpyaprakāra- viśeṣa- jijñāsayā praśnasya karaṇe tajjijñāsā-nivartanāya prakāraviśeṣajñānajanakottara- vākyasyaivākāṅkṣitatvenānākāṅkṣita-kriyādhyāhārasyānucitatvāditi bhāvaḥ.

---

1. *Sarvasmāttātparyābhāve* - Ka, Kha
2. *Kā'pyanupapattiriti* - Kha
3. *Kriyānvayasambhavāt* - Kha, Ga
4. *Vākyasyodāharaṇasyāsaṅgatyāpatteriti* - Ka, Ga

**T12. Yattu 'Śṛṇu Garjati Megho', 'Naṭo Gāyati śṛṇu', 'Ghaṭo'naśyat paśye'tyādāvagateśceti tanna, saviśeṣaṇe hi vidhi-niṣedhau sati viśeṣye bādhe[1] viśeṣaṇamupakrāmata[2] iti viśeṣaṇeṣu garjana-gānābhāveṣu śravaṇadarśanānvayasambhavāditi.**

---

**T12.** Nanu kriyāmukhyaviśeṣyakānvayabodhamanaṅgīkṛtya prathamāntārtha-mukhyaviśeṣyaka- bodhasvīkāre 'śṛṇu garjati megho', 'naṭo gāyati śṛṇu', 'ghaṭo'naśyat paśye'tyādau garjanāśrayameghasya gānakartṛnaṭasya śrāvaṇakarmatvāsambhavāt vartamānanāśapratiyogyutpattika-nāśapratiyogighaṭasya dṛśyartha-karmatvāsambhavācca kriyāmukhya-viśeṣyakānvayabodha eva svīkartavya itīmāmāśaṅkāṃ samādhātumanuvadati - **Yattu śṛṇviti**. saviśeṣaṇe hi vidhi-niṣedhau pravartamānāviti nyāyena garjanasya gānasya nāśasya ca śṛdṛśyarthatvādyasambhavena na kāpyanupapattirityata āha - **Tanna saviśeṣaṇe hītyādinā** na ca saviśeṣaṇe hīti nyāyamāśritya samādhānaṃ na sambhavati tādṛśanyāye prāmāṇābhāvāditi vācyam. Svargo dhvastaḥ śikhī dhvasta ityādiprayogadarśanāt dhvasta ityatra ktapratyayārthadhvaṃsapratiyoginaḥ śikhinaḥ svargiṇaścāvināśena tatrānvayāsambhavena śikhāsvargayos tadanvayasvīkārāt . Na ca dhvaṃsapratiyoginaḥ prathamāntārthasya śikhāyāṃ svarge cāpadārthe kathamanvayaḥ yatkiñcitpadārthaniṣṭhaprakāratānirūpita-viśeṣyatā- sambandhenānvayabodhaṃ prati padajanyapadārthopasthitir mukhyaviśeṣyatā-sambandhena kāraṇamityetādṛśārthakapadārthaḥ padārthenānveti na tu padārthaikadeśeneti nyāyāditi vācyam. Ekadeśanyāyasyāpi kvacid dṛṣṭatvāt. Nanu kva dṛṣṭa iti cecharaiḥ śātitapatraścaitrasya gurukulamityādau taddarśanāt. Nanu ghaṭo nityaḥ paśurapaśurityādāvapi nityatvāśrayaghaṭatvavān paśubhinnapaśutvavān ityādyanvayabodhe bādhakābhāvena teṣāmapi prāmāṇyaṃ syāditi cenna. śarairityādeḥ sākāṅkṣatvāt ekadeśānvayasambhave'pi ghaṭo nitya ityāder nityasākāṅkṣatvābhāvenāprāmāṇyāt. Nanu svargo dhvasta ityādau nityasākāṅkṣatābhāvāt kathamekadeśānvaya iti cenna, anvayabodhasya tātparyādhīnatvena prakṛte ekadeśānvayatātparyasya prāmāṇyānyathā-nupapattyā svīkārāt. na ca ghaṭo nitya ityāderapi tātparyasadbhāve ekadeśānvayasambhave prāmāṇyāpattiriti vācyam. Sati tātparye iṣṭatvāt. ata

## IV.3 संस्कृत-व्याख्या (Explanatory Notes in Sanskrit )

**T1.** 'सुप्तिङन्तचयम्' वाक्यमिति वाक्यलक्षणं प्रसिद्ध्यति। परन्त्वत्र विचारणीयमेतदस्ति यत् सुबन्त-समुदायः तिङन्त-समुदायश्च सम्मिल्य वाक्यं भवति, अथवा सुबन्ततिङन्तयोः समुदायो वाक्यं भवति, अथवा सुबन्तानां समुदायः तिङन्तानां समुदायश्च स्वतन्त्ररूपेण वाक्यं भवति? पक्षान्तरे यदि 'पदसमूहो वाक्यम्' इति वाक्य-लक्षणं स्वीकुर्मस्तर्हि सार्थक-शब्दानामनर्थक-समुदायोऽपि वाक्यं भविष्यति। यथा 'गौः अश्वः पुरुषः हस्ती'। अत्र सार्थकाः शब्दाः सन्ति किन्तु तेषां समुदायः सार्थको नास्ति। अतः इयं स्वाभाविकी जिज्ञासा समुदेति यद् वाक्यं नाम किम्? तस्योत्तरं प्रयच्छता ग्रन्थकारेण 'एकतिङ् वाक्यम्' इति महाभाष्य-वचनाधारेण 'एकतिङन्तार्थमुख्यविशेष्यक- बोधजनकपदसमूहो वाक्यम्' इति वैयाकरणसम्मतं वाक्य-लक्षणमुल्लिखितम्। लक्षणेऽस्मिन् 'एकतिङ्' इत्यंशे 'एकमेव यत् तिङ् तद् वाक्यमस्ति' इत्येतादृशः कर्मधारयोऽर्थोऽभीष्टो नास्ति। अन्यथा केवलं 'पचति' इत्यपि वाक्यं भविष्यति। अतः 'एकमस्ति तिङ् यस्मिन्' इत्येवं बहुव्रीहि-समासमङ्गीकृत्य अर्थः कर्तव्यः। एतदाधारेण 'एकतिङ्-घटितः पद-समुदायो वाक्यमित्येतद् वाक्य-लक्षणं निष्पन्नमस्ति। एतस्मिन् वाक्य-लक्षणे स्वीकृते सति यत्र द्वे तिङन्त-पदे स्तः तत्रापि एकस्यैव तिङन्तार्थस्य मुख्यविशेष्यतायां सत्यामेतस्य वाक्यलक्षणस्य समन्वयने न कोऽपि दोषः समापतति। एतल्लक्षणानुसारं वाक्ये एकस्य तिङन्तस्यानिवार्यता सिद्ध्यति, ततश्च स्वाभाविकी काचिद् जिज्ञासा जायते यत् किं सर्वेषु वाक्येषु एकस्य तिङन्त-पदस्य अनिवार्यता वर्तते? अस्याः जिज्ञासायाः समाधानं कुर्वता ग्रन्थकारेण कथितमस्ति यत् 'क्रियारहितं वाक्यं न भवति' इति महाभाष्यकारस्य मतमस्ति। कात्यायनेनाप्यभिमतं वर्तते यद् यत्र अन्यत् क्रियापदं न भवति तत्र 'अस्ति' इति क्रियापदस्य अथवा 'भवति' इति क्रियापदस्याध्याहारः कर्तुं शक्यते। अतः सर्वेष्वपि वाक्येषु एकं तिङन्तपदं भवितुं शक्नोति।

**T2.** वैयाकरणैः क्रियामुख्यविशेष्यकः शाब्दबोधः स्वीक्रियते इति सर्वविदितं तथ्यम्। अतः वाक्य-लक्षणे एकतिङन्तार्थ-क्रियायाः मुख्यविशेष्यता उल्लिखिता वर्तते। एतन्मताधारेण पूर्वपक्षं प्रस्तुवता ग्रन्थकारेण शङ्का प्रकी)ता यद् क्रियापदस्याध्याहारः सर्वत्र सम्भवतीति मतमङ्गीकृत्य यदि 'एकतिङन्त-घटितं पदसमूहं' वाक्यमङ्गीकुर्मस्तर्ह्यपि तिङन्तार्थ-क्रियाया मुख्यविशेष्यता-स्वीकरणापेक्षया प्रथमन्तार्थस्यैव मुख्यविशेष्यता किं न मन्तव्या। यतोहि नैयायिक-मतानुसारेण प्रथमान्तार्थ-मुख्यविशेष्यक एव शाब्दबोधः स्वीकर्तव्यो भवति। एतस्योत्तरं प्रयच्छन् ग्रन्थकारः कथयति यत् 'पश्य मृगो धावति' इत्यस्मिन् वाक्ये प्रथमान्तार्थस्य मुख्य-विशेष्यत्वाङ्गीकारे वाक्यभेदो मन्तव्यः स्यात्। मृगः इति यत् प्रथमान्तं पदमस्ति, तस्य विशेष्यत्वाङ्गीकारे दर्शनक्रियायाः मृगे कर्मरूपेणान्वयः सम्भविष्यति, अतः मृगपदे द्वितीयापत्तिरपि सम्भविष्यति। 'मृग' इत्यनेन 'धावति'-क्रियायाः कर्तुः समानाधिकरणाद् 'धावति' इति तिङन्तस्य स्थाने 'धावन्त'मिति शत्रन्तः प्रयोगो भविष्यति। अतः 'पश्य मृगो धावति' इत्यस्य वाक्यस्य स्थाने 'धावन्तं मृगं पश्य' इत्येवं वाक्यं प्रयुक्तं भविष्यति। किन्तु व्यवहारे तु द्वयोरपि वाक्ययोः प्रयोगो दृश्यते तथा तयोः वाक्ययोः तात्पर्यमपि भिन्नं भिन्नमस्ति। 'पश्य मृगो धावति' इत्येतस्य वाक्यस्यार्थो भवति - मृगकर्तृकां वर्तमानकालिकीं धावनक्रियां पश्य। एवमेव 'धावन्तं मृगं पश्य' इत्येतस्यार्थो भवति - धावन्तं (धावनक्रियाव्यापृतं) मृगं पश्य। 'तम्' पदस्याध्याहारे ग्रन्थकारेण वाक्यभेदः गौरवदोषश्च प्रदर्शितः। किन्तु अत्रैतदवधेयमस्ति यत् यः आशयः

अभीष्टार्थो वा 'पश्य मृगो धावति' इत्येतस्माद् व्यक्तीभवति सः 'तम्' इति पदस्याध्याहारेण न सम्भविष्यति।

**T3.** पूर्वपक्षैरेषा शङ्का कर्तुं शक्यते यत् 'तम्' इति पदस्याध्याहारे यदि वाक्यभेदस्य प्रसङ्गः समुपस्थितो भवति तर्ह्यपि तत्र न कश्चिद् दोषो वर्तते। अस्याः शङ्कायाः समाधानं कुर्वता ग्रन्थकारेण 'तिङतिङः' इति सूत्रमुदाहृतं यस्यार्थो भवति - अतिङन्तपरस्य तिङन्तस्य निघातो भवति। यदि एकस्मिन् वाक्ये अनेकानि तिङन्तानि पदानि नैव सम्भवन्ति तर्हि 'अतिङन्त-परस्य' इति कथनमेव व्यर्थं स्यात्। यतोहि यदि एकस्मिन् वाक्ये एकाधिकं तिङन्तं सम्भवति तर्ह्येव तिङन्तात् परं तिङन्तं सम्भविष्यति यस्य व्यावृत्तये अतिङः इति कथनमावश्यकं भविष्यति।

सर्वत्र क्रियापदस्याध्याहार-सम्भावनामाशङ्कमानेन ग्रन्थकारेण शङ्का समुपस्थापिता यत् 'हरेर्दशावताराः' इत्यस्मिन् वाक्ये कस्याः क्रियायाः अध्याहारो भविष्यति। अस्य समाधानं तेन 'भवन्ति' इति बहुवचनान्तक्रियया विहितमस्ति। किन्तु यत्र लडर्थ-वर्तमानकालस्य अन्वयस्य योग्यता न भवति तत्र वर्तमानकालस्यान्वय-स्वीकारे आवश्यकता न भवति। अतः 'हरेर्दशावताराः' इत्यत्र 'भवन्ति' इति क्रिया- पदस्याध्याहारे कृते सत्यपि वर्तमानकालस्यान्वयं विनाऽपि 'भवन्ति' इति क्रियापदस्य प्रयोगः संघटितो भविष्यति। अत्र द्वितीयोऽप्युपायो वर्तते यत् वर्तमान-सामीप्ये लट्-लकारो भवतीति तथ्यम्। तर्हि वर्तमान-सामीप्यार्थकलट्-लकारस्य प्रयोगमपि मत्त्वा 'भवन्ति' पदस्य लकारार्थस्योपपत्तिः कर्तुं शक्यते। मुकुटेन (रायमुकुटेन) तु 'जयन्ति कृष्णस्य दशावताराः' इति कथयित्वा जयन्ति पदेन तिङन्तपदस्य पूर्तिः कृताऽस्ति। परन्तु 'वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नद' इत्यत्र लडर्थवर्तमानकालः विवक्षितो नास्ति - इत्येवं मिश्रेणाभिमतम्।

नैयायिकैः क्रियारहितमपि वाक्यत्वेन स्वीकृतमस्ति। अतः तेषां मतानुसारं - सुबन्तसमूहः, तिङन्तसमूहः तथा सुबन्त-तिङन्तसमूहश्चेत्येवंप्रकारकं त्रिविधं वाक्यं सम्भवति। यथा 'त्रयः कालाः' इत्येतत् सुबन्तसमूहात्मकं वाक्यं भवति। एवमेव 'पचति भवति' इत्येतत् तिङन्तसमूहात्मकं वाक्यं भवति तथा 'चैत्रः पचति' इत्येतत् सुबन्त-तिङन्तयोः समुदायात्मकं वाक्यं भवति।

एकः पदार्थोऽपि मुख्यविशेष्यता-बोधजनकता-कारणादेकं वाक्यमिति कथ्यते। एवंप्रकारकं एकवाक्यत्वमेषु त्रिषु वाक्येषु तु अस्त्येव किन्तु 'पश्य मृगो धावति' इत्यत्रापि भवति। नैयायिकानां मतानुसारं 'पश्य मृगो धावति' इत्यस्य शाब्दबोधः एवं भवति - 'धावनकर्तृकः मृगकर्मकः दर्शनाश्रयभूतस्त्वम्'। वैयाकरणैः मृगे या द्वितीयापत्तिः समुपस्थापिता वर्तते तस्याः वारणमपि नैयायिकैः 'मृगो धावति' इत्यस्य वाक्यार्थे कर्मत्वमङ्गीकृत्य परिहृतं मन्यते। यतोहि यावद् वाक्यमेतत् प्रातिपदिक-संज्ञकं न भवति तावत् ततः द्वितीया भवितुं न शक्नोति। एवमेवात्र वाक्यभेदोऽपि न भविष्यति। 'पश्य मृगो धावति' इत्यत्र वैयाकरणैरङ्गीकृता वाक्यभेदापत्तिरपि न सम्भविष्यति, यतोहि वाक्यार्थस्य कर्मत्वे 'तं' पदस्याध्याहारोऽपि अपेक्ष्यते।

**T4.** नैयायिकैरेवमपि कथ्यते यत् महाभाष्ये क्रियाविनिर्मुक्तं वाक्यं न भवतीति यत् कथनमस्ति तद् वस्तुतः किञ्चिद् अनवधानात्मकं कथनं वर्तते। यतोहि 'त्रयः कालाः' इत्येतत् सर्वथा क्रियारहितं वचनमपि वाक्यत्वेन लोके प्रसिद्धमस्ति। वस्तुतस्तस्य वाक्यत्वे न कोऽपि सन्देहो भवति। परन्तु अत्र न कस्या अपि क्रियायाः अध्याहारः सम्भवति, यतोहि 'त्रयः कालाः' इत्यनेन अन्वययोग्यस्य एकस्य कालस्य काचित्

क्रिया कथं योजयिततुं शक्यते। अतः अगत्या क्रियारहितमपि वाक्यं भवतीति स्वीकर्तव्यं वर्तते। क्रियाविशेष्यकस्य शाब्दबोधस्य स्वीकारप्रसङ्गे नैयायिकैः काचिदापत्तिः प्रदर्शिता यत् 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादिवाक्ये 'तत्' इति शब्देन मुख्यपुरुषस्य परामर्शः नैव भवितुमर्हति यतोहि तत्-शब्देन मुख्यविशेष्यस्य ग्रहणं भवति। क्रियाया मुख्यविशेष्यत्वाङ्गीकारे पुरुषः मुख्यविशेषणरूपेण उपस्थितो भविष्यति। अतः अत्र 'तत्' शब्दः मुख्यविशेष्यभूतायाः क्रियायाः परामर्शको भविष्यति न तु विशेषणीभूतस्य पुरुषस्य। अस्यां स्थितौ तस्य पदेन पुरुषस्य परामर्शः न भवति चेत् 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यस्मिन् वाक्ये 'तस्य' इत्यनेन चरणौ इत्यस्यान्वयोऽपि न सम्भविष्यति। एवं 'दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इति प्रयोगोऽपि साधुः भविष्यति यतोहि 'तस्य' इति पदेन बहुत्वभूतस्य राजमातङ्गस्य परामर्शः नैव भविष्यति।

**T5.** उपर्युक्तवाक्यैः न्याय-मतोचिताः युक्तिरुपस्थाप्य ग्रन्थकारेण इदानीं तस्याः खण्डनं क्रियते। तस्य कथनमिदमस्ति यत् नौयायिकैः 'पश्य मृगो धावति' इत्यस्मिन् वाक्ये मृगस्य दर्शनक्रियायां कर्मतासंबन्धेन योऽन्वयः स्वीकृतोऽस्ति सः समुचितो नास्ति, यतोहि एष एव सिद्धान्तो वर्तते यत् नामार्थस्य धात्वर्थेन सममभेदातिरिक्तः साक्षात् सम्बन्धो न भवति। नामार्थ-धात्वर्थयोर्मध्ये भेदसम्बन्धार्थं विभक्त्यर्थस्य माध्यमोऽपेक्षितोऽस्ति। मृगे प्रथमाविभक्त्यर्थस्तु नामार्थातिरिक्तं न किञ्चिदस्ति। यदि इमं सिद्धान्तं नाङ्गीकुर्मस्तर्हि 'तण्डुलः पचति' इत्येतद् वाक्यमपि साधुः भवितुं शक्नोति। यतोहि तण्डुलस्य कर्मतासंबन्धेन पाकक्रियायामन्वयोऽपि मन्तुं श्क्यते। यदि नैयायिकैरेवमुच्यते यत् 'पश्य मृगो धावति' इत्यत्र धावनकृतिविशिष्टस्य मृगस्य कर्मतासंबन्धेन दर्शनक्रियायामन्वयोऽस्ति, तथा एषः नामार्थो न वर्तते इत्यतः नामार्थयोरभेदान्वयः इत्यस्य उपर्युक्त-सिद्धान्तस्य विरोधोऽपि न भवति तर्हि मृगे प्रथमाऽपि न भवितुं शक्नोति।

अपरञ्च, एतदपि ध्यातव्यमस्ति यत् मृगस्य धावनक्रियाया दर्शनक्रियायाः कर्मत्वेन यदङ्गीकरणमभीष्टमस्ति, तदपि न्याय-मतानुसारं नोपपद्यते। वस्तुतः महाभाष्यकारेण 'पश्य मृगो धावति' इत्यत्र एकवाक्यता अभीष्टाऽस्तीति तथ्यं हेलाराजेनापि स्पष्टीकृतं वर्तते।

**T6.** वस्तुतः क्रियाविनिर्मुक्तमपि वाक्यं भवतीति प्रतिपाद्य एव नैयायिकैः 'त्रयः कालाः' इति वाक्यमुद्धृतं वर्तते। वाक्येऽस्मिन् कस्यचित् कालविशेषस्य क्रियायाः अध्याहारोऽपि न सम्भवतीति नौयायिकैर्मन्यते। एतदभिलक्ष्य ग्रन्थकारस्य कथनमस्ति यत् 'त्रयः कालाः' इत्यस्मिन् वाक्ये 'ज्ञायन्ते' इत्यस्य क्रियापदस्याध्याहारः कर्तुं शक्यते। अतः क्रियाविनिर्मुक्तस्य वाक्यस्याङ्गीकरणं सङ्गतं नास्ति। वाक्ये क्रियायाः विशेष्यत्वाङ्गीकारे न्यायमते कश्चन दोषः प्रदर्शित आसीत् यत् 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यत्र 'तत्' शब्देन पुरुषस्य परामर्शो न भूत्वा क्रियायाः परामर्शो भविष्यति यदभीष्टं न वर्तते। एतदभिलक्ष्य ग्रन्थकारेण 'शृणु गर्जति मेघो', 'नटो गायति शृणु', 'घटोऽनश्यत् पश्य'- इत्यादीनि वाक्यान्युपस्थाप्य वाक्ये प्रथमान्तविशेष्यता-स्वीकारप्रसङ्गे अव्याप्तिदोषः समुपस्थापितः, यतोहि तेषु पूर्वोक्तयोः द्वयोः वाक्ययोः श्रवणस्य कर्म गर्जनं गायनञ्चास्ति न तु प्रथमान्तः मेघः, नटो वा। अतः 'पश्य मृगो धावति' इत्यत्र मृगे प्रथमाया अर्थः कर्म इत्यङ्गीकारोऽपि समुचितो न भाति।

**T7.** न्यायमते 'तिङ्' इत्यस्यार्थः कृतिरित्यस्ति। अतः नैयायिकैः तिङर्थ-संख्याया अन्वयं मुख्यविशेष्यकप्रथमान्तपदार्थे कर्तुमाख्यातेनोपस्थाप्य-संख्याप्रकारक-बोधं प्रति मुख्यविशेष्यत्वेन प्रथमान्तपद-जन्योपस्थितिः कारणत्वेनाङ्गीक्रियते। किन्तु प्रथमान्तपदस्य कर्मत्वेन दर्शनक्रियायामन्वयाङ्गीकारे आख्यातोपस्थाप्य- संख्यायास्तत्रान्वयो न सम्भविष्यति। अपरञ्च यदि आख्यातोपस्थाप्य- संख्याप्रकारक-बोधं प्रति मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितिः कारणत्वेन नाङ्गीक्रियते तर्हि 'हंसीव धवला कीर्तिः' इत्यत्र इवार्थे विशेषणत्वेनोपमानभूते हंसीति पदेऽपि संख्यान्वयः सम्भविष्यति यदभीष्टं नास्ति। यदि 'पश्य मृगो धावति' इत्यत्र मृगपदे तिङर्थसंख्याया अन्वयो न क्रियते तर्हि 'पश्य धावति मृगाः' इत्येवंरूपाः प्रयोगा अपि साधुत्वं प्राप्स्यन्ति। नैयायिकैः क्रियाविशेष्यकबोधे कश्चन दोषः प्रदर्शितः यत् 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यत्र 'प्रयाति' इति क्रियायाः विशेष्यत्वाङ्गीकारे 'तत्' पदं प्रथमायाः परामर्शि न भवति चेत्तर्हि तत् 'प्रयाणम्' इत्यस्याः क्रियायाः परामर्शं कारयिष्यति अथवा पुरुषस्येति। अस्याः शङ्कायाः समाधानं कुर्वता ग्रन्थकारेणोक्तं यत् कुत्रचित् 'तत्' इति सर्वनामपदं विशेषणस्यापि परामर्शं कारयिष्यति। यथा 'पटोलपत्रं पितघ्नं नाडी तस्य कफापहा' इत्यत्र 'तस्य' पदेन पटोलपत्रे विशेषणीभूतस्य पटोलस्य परामर्शो भवति। एवमेव 'चैत्रो ग्रामं गतस्तत्र मैत्रः किं कुरुतेऽधुना' इत्यत्र 'तत्र' पदे वर्तमानेन 'तत्' इत्यनेन पदेन ग्रामस्य परामर्शो भवति यद् विशेषणीभूतमस्ति न तु विशेष्यीभूतम्। किन्तु पदार्थतावच्छेदकरूपेण यद् विशेषणं भवति तस्य तत् पदेन कुत्रापि परामर्शो न भवति। अतः 'दशैते राजमातङ्गाः' इत्यत्र न कोऽपि दोषो वर्तते। अतः सर्वनामपदं सामान्यतः प्रधानस्य परामर्शि भवति इति कश्चन उत्सर्ग एव वर्तते न तु नियमः। अतः विशेषस्थितौ बाधः स्वाभाविक एवास्ति।

**T8.** 'पश्य मृगो धावति' इत्यत्र मृगस्य दर्शनक्रियायां कर्मत्वाङ्गीकारे द्वितीयापत्तिरूपदोषस्य वारणार्थं नैयायिकैः धावनक्रियाविशिष्टो मृगः कर्मत्वेनाङ्गीकृतः यः वाक्यार्थोऽप्यस्ति। अतः नैयायिकैरेवं प्रतिपादितं वर्तते यत् 'मृग' इत्यस्मिन् प्रातिपदिके द्वितीयापत्तिर्न भविष्यति। किन्तु एवं सति प्रथमाऽपि न भविष्यति, यतोहि सोऽर्थो वाक्यार्थोऽस्ति न तु प्रातिपदिकार्थः। अतस्तत्र प्रातिपदिकार्थे प्रयुज्यमाना प्रथमा कथं भवितुमर्हति - अस्याः शङ्कायाः न्याय-मते समाधानं कुर्वता ग्रन्थकारेणोक्तं यत् प्रथमतः आख्यातोक्ते संख्यायुक्ते नामार्थे प्रथमा भविष्यति तत्पश्चात् क्रियान्तरेण अन्वयो भविष्यति। अतः प्रथमायां सत्यां न काऽपि आपत्तिः भविष्यति।

**T9.** वैयाकरणैः व्यापारमुख्यविशेष्यकः शाब्दबोधोऽङ्गीकृतः। पश्य मृगो धावति इत्यत्र मृगकर्तृक-धावन-क्रियाया एव दर्शनक्रियायामन्वयं स्वीकुर्वद्भिस्तैस्तत्र महाभाष्यकारस्य स्वीकृतिरप्यङ्गीकृता। अस्मिन् पक्षे हेलाराजस्य सम्मतिरपि तैरङ्गीकृता वर्तते। किन्तु न्यायमतं प्रस्तुवता ग्रन्थकारेण तत् समुचितं नाभिमतम्। यतोहि एष एव सिद्धान्तोऽस्ति यत् प्रकृति-प्रत्ययौ स्वं स्वमर्थं सहैव ब्रूतः। प्रकृति-प्रत्यययोरर्थे प्रत्ययार्थस्य प्राधान्यं भवति। अतः तन्नियमानुसारेण नैयायिकैरेवं मन्यते यत् धात्वर्थनिष्ठप्रकारतानिरूपिता या विशेष्यता वर्तते तेन विशेष्यता-सम्बन्धेन शाब्दबोधं प्रति विशेष्यताप्रत्ययजन्योपस्थितिः कारणं भवति। अतः पचति इत्यादिषु धात्वर्थव्यापारः प्रकारः विशेषणं वा भवति तथा प्रत्ययार्थस्तु तिङर्थकृतिविशेष्यः। उक्त-नियमानुसारं धात्वर्थप्रकारकः धात्वर्थविशेष्यकोऽन्वयबोधो न भवति।

**T10.** न्याय-मतानुसारं प्रथमान्तार्थस्य प्रधानताङ्गीकारेऽपि मृगकर्तृकोत्कटधावनस्य कर्मता-संबन्धेन 'दर्शन'-क्रियायां विशेषणत्वेनान्वये न किमपि काठिन्यं वर्तते, यतोहि तत्र विशेष्यरूपे अन्वयिनि अन्वयित्वं विशेषणमेवास्ति। धावनक्रियायां विशेष्यो मृगोऽस्ति, तत्र दर्शनक्रिया च अन्वयिनी वर्तते। तत्र अन्वयित्वं विशेषणमेवास्ति यद् धावनक्रियायां सम्भवति। एवं प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्याङ्गीकारेऽपि भाष्यकारस्य वचनस्य विरोधो न भवति न वा हेलाराजस्योक्तेः। मीमांसायामपि एवम्प्रकारकं विशेषणं स्वीकृतं वर्तते। यथा 'सोष्णीषा ऋत्विजः प्रचरन्ति, लोहितोष्णीषा ऋत्विजः प्रचरन्ति' च।

**T11.** न्याय-मतानुसारं प्रथमान्तार्थ-मुख्यविशेष्यकबोधस्याङ्गीकारे वैयाकरणैः एको दोषः प्रदर्शितः यत् 'पश्य मृगो धावति' इत्यत्र प्रथमान्तार्थस्य विशेष्यत्वाङ्गीकारे 'पश्य' क्रियायाः कर्मत्वात् आख्यातार्थेन कृत्याश्रयेण सामानाधिकरण्याच्च 'लटः शतृशानचावप्रथमासमानाधिकरणे' इत्यनेन पाणिनि-सूत्रेण शतृप्रत्ययान्तः प्रयोगः सम्भवति। अतः 'धावन्तं मृगं पश्य' इत्येवंप्रकारकः प्रयोगः सम्भविष्यति। एतस्य दोषस्य न्याय-मतानुसारेण समाधानं प्रस्तुवता ग्रन्थकारेणोक्तं यत् पर्यायशब्दानां प्रयोगे वक्तुरिच्छैव नियामिकाऽस्ति। यदि 'मृग' इति पदं दर्शनक्रियायाः कर्मत्वेनेष्टं न स्यात्तर्हि वक्त्रा 'मृग' पदस्योच्चारणमपि नैव कृतं स्यात् अपि तु केवलं 'पश्य धावति' इत्येवोक्तं स्यात्। वैयाकरणैः सर्वत्र क्रियायुक्तस्यैव वाक्यत्वमङ्गीकृतम्। 'त्रयः कालाः' इत्यत्रापि वैयाकरणैः 'ज्ञायन्ते' इत्यस्य क्रियापदस्याध्याहारं कृत्वा क्रियायुक्तता साधिताऽस्ति। एतत्प्रसङ्गे नैयायिकानां पक्षं प्ररतुवता ग्रन्थकारेणोक्तं यत् 'त्रयः कालाः' इत्यत्र ज्ञानक्रिययोः आकाङ्क्षैव न वर्तते। अतः 'ज्ञायन्ते' इति क्रियापदस्याध्याहार उपयुक्तो नास्ति। अत एव क्रियविनिर्मुक्तं वाक्यमपि स्वीकर्तव्यं वर्तते।

**T12.** प्रथमान्तार्थ-मुख्यविशेष्यक-बोधे 'शृणु गर्जति मेघो', 'नटो गायति शृणु', 'घटोऽनश्यत् पश्य' इत्यादिस्थलेषु दोषापादानं कुर्वद्भिः वैयाकरणैः क्रियाविशेष्यकशाब्दबोध एवाङ्गीकर्तव्यः इत्येषः सिद्धान्तः स्थिरीकृत आसीत्। एतत्प्रसङ्गे न्यायमतं प्रस्तुवता ग्रन्थकारेणोक्तं यत् सविशेषणे एव विधिनिषेधौ प्राप्नुवतः। विशेष्ये बाधे सति तौ विशेषणेष्वपि उपसङ्क्रान्तौ भवतः। प्रथमान्तार्थ-मुख्यविशेष्यकस्य शाब्दबोधस्याङ्गीकारे विशेष्यभूते मेघे तथा नटे च श्रवणस्यान्वयासम्भवाद् विशेषणभूतयोः गर्जन-गायनयोः क्रिययोः श्रवण-क्रियाया अन्वयो भवति। अतः प्रथमान्तार्थमुख्यविशेष्यक- शाब्दबोधस्याङ्गीकारेऽपि न कश्चिद् दोषो वर्तते।

**T13.** 'शृणु गर्जति मेघः' इत्यत्र श्रवणक्रियायां प्रथमान्तार्थस्यैव कर्मत्वमस्ति - इति न्यायमतं प्रस्तुवता तथा तन्मतनिराकणायोपस्थापितं मतं खण्डयता ग्रन्थकारेणोक्तं यत् "सविशेषणे हि विधि-निषेधौ सति विशेष्ये बाधे विशेषणमुपक्रामते" इति न्यायानुसारेण गर्जनविशिष्टस्य मेघस्य कर्मतायाः बाधेऽपि गर्जनकर्मतायाः अन्वयस्तु सम्भवत्येव। अतः कर्मत्वं प्रथमार्थोऽस्ति - इति मतमनुचितं नास्ति।

**T14.** एषो मान्यः सिद्धान्तोऽस्ति यत् विभक्तौ लक्षणा न सम्भवति। अतः एतत्सिद्धान्तानुसारं प्रथमाया अर्थः कर्मत्वं नास्ति। लक्षणा शक्यसम्बद्धा वर्तते। मृगस्य धावनक्रियया शक्यसम्बन्धाभावे लक्षणाऽपि न सम्भवति। अतः सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपक्रामते' इति न्यायमेव स्वीकृत्य पश्य मृगो धावति इत्यत्र धावनकर्तृके मृगे विशेषणीभूतायां धावनक्रियायां दर्शनक्रियाया अन्वयः स्वीकर्तव्यः।

महाभाष्यकारेण 'शङ्खाः श्रूयन्ते', 'भेर्यः श्रूयन्ते' इत्येवंविधः प्रयोगः स्वीकृतोऽस्ति। एवंविधात् प्रयोगादपि एवं प्रतीयते यद् ध्वनिविशिष्टाः शङ्खाः अथवा भेर्यः श्रूयन्ते। एतयोः द्वयोः वाक्यार्थयोः विशेष्ये क्रियाया अन्वयोऽभीष्टोऽस्ति। एवमेव अधोलिखितः श्लोकोऽपि द्रष्टव्यो वर्तते -

*प्रबुद्धसेन्द्राम्बुदनादधीरं कृष्णार्णवाम्पर्णचरेकहंसः।*
*मन्दानिलापूरकृतं दधानो निध्वानमश्रूयत पाञ्चजन्यः।।*

श्लोकऽस्मिन् पाञ्चजन्यस्य श्रवणस्य तात्पर्यमिदमस्ति यद् ध्वनिविशिष्टस्य पाञ्चजन्यस्य श्रवणम् इत्यनेन तात्पर्येण एव विशेष्ये श्रवण-क्रियाया अन्वयं कृत्वैवोपपादनं कर्तव्यमस्ति।

**T15** साम्प्रतमियं शङ्का प्रस्तूयते यत् प्रथमान्तस्य मृगस्य यदि दर्शनक्रियायामन्वयः क्रियते तर्हि आख्यातार्थ-संख्याया मृग इति प्रथमान्तार्थेन अन्वयो नैव सम्भविष्यति, यतोहि "आख्यातोपस्थाप्य संख्याप्रकारकान्वयबोधं प्रति मुख्यविशेष्यतया प्रथमान्तपद- जन्योपस्थितिर्हेतुः" इत्येषो नियमोऽस्ति। अर्थात् आख्यातार्थ-संख्याप्रकारकं बोधं प्रति मुख्यविशेष्यरूपेण प्रथमान्तपदजन्योपस्थितिः कारणं वर्तते। एतदनुसारं 'मृग' इति पदं मुख्यविशेष्यं भवेत्। 'पश्य मृगो धावति' इत्यत्र 'मृग' इति पदं मुख्यविशेष्यं नास्ति किन्तु दर्शनक्रियायां विशेषणमेवास्ति। यदि उपर्युक्तं कार्यकारणभावं नाङ्गीकुर्मस्तर्हि 'हंसीव धवला कीर्तिः' इत्यत्र हंसी इत्यत्रापि संख्यान्वयः सम्भविष्यति। यदि मृगे आख्यातार्थ-संख्याया अन्वयः आवश्यको नाङ्गीक्रियते तर्हि 'पश्य धावति मृगाः' सदृशाः प्रयोगा अपि साधवो भविष्यन्ति।

उपर्युक्ताशङ्कायाः निराकरणार्थं न्यायमतेन उत्तरं प्रयच्छता ग्रन्थकारेणोक्तं यत् आख्यातार्थ-संख्याप्रकारकं बोधं प्रति प्रथमान्तार्थस्य मुख्यविशेष्यतया उपस्थितिः आवश्यकी नास्ति। यतोहि कुत्रचित् अमुख्येनापि अस्यान्वय इष्टोऽस्ति। यथा चैत्र एव पचति। अत्र चैत्रभिन्नो नैव पचति, चैत्र एव पचति इत्ययमर्थो वर्तते। अत्र चैत्रस्य अन्यत्रोक्तेन अन्ययोगव्यवच्छेदेन पदार्थेन अन्वयो वर्तते। अतः चैत्रः मुख्यविशेष्यं नास्ति।

**T16** उपर्युक्तयुक्त्या एतदेव सिद्धं भवति यत् आख्यातोपस्थाप्य-संख्याप्रकारकमन्वयबोधं प्रति मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितेः कारणत्वाङ्गीकारे अन्ययोगव्यवच्छेदस्थलेऽपि दोषः सम्भविष्यति। अतः आख्यातोपस्थाप्य-संख्याप्रकारकं बोधं प्रति विशेष्यतया प्रथमान्तपदजन्योपस्थितिः कारणत्वेनाङ्गीकर्तव्या न तु मुख्य- विशेष्यतया। अतः 'चैत्र एव पचति' इत्यत्रापि न कश्चिद् दोषो वर्तते। यदि एवं नाङ्गीक्रियते तर्हि 'हंसीव कृष्ण ते कीर्तिः', 'स्वर्गङ्गामवगाहते' इति वाक्येषु उपमानभूते 'हंसी'ति पदे संख्याश्रयत्वानङ्गीकारे 'स्वर्गङ्गा' इत्यत्र अवगाहनत्वं तथा चाख्यातार्थ-संख्याया उपमानोपमेयगतं साधारणधर्मत्वञ्चोपपन्नं नैव भविष्यति।

□□

# Appendix - 1

## Index of quoted Authors (उद्धृत ग्रन्थकार)

**(Throughout the Indices 'T' refers to Text and 'C' refers to Commentary)**

# Appendix - 2

## Index of quoted Texts (उद्धृत ग्रन्थ)



# Appendix - 3

## Index of quoted Views (Authors / schools)

# Appendix - 4

## Index of *Loka-Nyāya*-s quoted



# Appendix - 5

## Index of Stylistic Expressions

# Appendix - 6

## Index of śāstric *Nyāya-s* quoted in the Commentary

# Appendix - 7

## The śāstric statements quoted (उद्धृत शास्त्रीय वाक्य)

| | | |
|---|---|---|
| अस्तिर्भवतिपरः प्रथमपुरुषः (कात्यायनोक्त) | - | T1 |
| आख्यातस्थले प्रत्ययार्थप्राधान्यं त्यजेत् (यास्कोक्त) | - | T9 |
| आख्यातार्थेषु संख्यावर्तमानत्वादिषु भावस्यैव संख्या-कालातिरिक्ताख्यातार्थस्यैव प्राधान्यमस्तीति नियमात् | - | T9 |
| एकतिङ् वाक्यम् (वार्तिकोक्त) | - | T1 |
| एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहो वाक्यम् (भाष्योक्त) | - | T1 |
| तिङतिङः (पा. सू. ८.१.२८) | - | T3 |
| धावनकर्तृक-मृगकर्मक-दर्शनाश्रयस्त्वम् | - | T3 |
| धावनकृतिविशिष्ट-मृगस्य वाक्यार्थत्वेन नामार्थत्वसम्भवात् | - | T5 |
| नहि क्रियाविनिर्मुक्तं वाक्यमस्ति (भाष्योक्त) | - | T1 |
| नामार्थ-धात्वर्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयबोधः | - | T 5 |
| फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।। | | T1 |
| किञ्च नहि क्रियाविनिर्मुक्तं वाक्यमस्तीति फणिनो धरणीभारविजृम्भणभणतिः (भाष्यमत की आलोचना) | - | T4 |
| प्रकृति-प्रत्ययौ सहार्थं ब्रूतः (भाष्योक्त) | - | T9 |
| भावप्रधानमाख्यातम् सत्त्वप्रधानानि नागानि (यास्कोक्त निरुक्त) | - | T9/T9-c |
| लटः शतृशानचावप्रथमासमानाधिकरणे (पा. सू. ३.२.१२४) | - | T2 |
| (न) विभक्तौ लक्षणेति नियमात् | - | T14 |
| सविशेषणे हि विधि-निषेधौ सति विशेष्ये बाधे विशेषणमुपक्रामते | - | T12 |
| सुबन्तं हि यथानेकतिङन्तस्य विशेषणम्। तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्।। (हेलाराजोक्त) | - | T5 |

# Appendix - 8

## The Examples / Counter Examples quoted in the Text

एकघटवति भूतले घटौ न स्त
(There are no two pots in the floor in possesion of one pot ) T16-c

कति कालास्त्रयः कालाः
(How many tenses (Times) ten tenses) T11

गङ्गायां घोषमत्स्यौ स्त (The hut and fish are in Ganges) T4-c

घटोऽनश्यत्पश्य (See the jar has been destroyed) T6 / T12

चैत्र एव पचति (Chaitra alone cooks) T15

चैत्रः पचति (Chaitra cooks) T3/T5/T15

चैत्रान्यो न पचति (No one other than Chaitra cooks) T15/T15-c

चैत्रो ग्रामं गतस्तत्र गैत्रः किं कुरुतेऽधुना
(Chaitra has gone to village, what does Maitra do there?) T7

चैत्रो मैत्र इव गच्छतीत्यत्र (Chaitra walks like Maitra) T15-c

जयन्ति कृष्णस्य दशावताराः
(glory upon the Ten incarnations of Krishna) T3

तण्डुलः पचति (Rice cooks itself) T3/T5

त्रयः कालाः (Three tenses) T3/T6/T3-c

त्रयः कालाः ज्ञयान्ते
(Three tenses are being known) T11

दशैते राजमातङ्गाः (These are ten royal tribals) T7

दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः
(These are ten royal tribals and these are their horses) T4/T7-c

धावन्तं मृगं पश्य (See the deer running) T2/ T6

नटो गायति शृणु (Hear the dancer sings) T6/ T12

नीलं घटं पश्य (See the blue pot) T6-c

पचति भवति (Stays cooking) T1/T3-c

पटोलपत्रं पितघ्नं नाडी तस्य कफापहा
(The leaves of (Patol ) reduces
biles (*pitta*) and its tubular organ (नाडी) reduces the cough T7/T16-6

पश्य गृगो धावति (see the deer runs) T1/ T3/ T5

पश्य धावति गृगाः (see the deer (plural) runs) a counter example T15

पार्थ एव धनुर्धर (Arjuna alone is the warior) T15-c

प्रयाति पुरुषस्तस्य चरणावभिवादये
(Here goes the man and I bow to his feet) T4/T16-c

प्रबुद्धसेन्द्राम्बुदनादधीरं कृष्णार्णवाम्पर्णचरेकहंसः।
मन्दानिलापूरकृतं दधानो निध्वानमश्रूयत पाञ्चजन्यः।। T14
भूतले घटो ना T16 -c
भेर्यः श्रूयन्ते (The kettledrums are being heared) T14
मृगो धावति (deer runs) T8
लोहित आकाश (reddish sky) T12-c
लोहितः स्फटिक (reddish sphatika Gem) T12-c
लोहितोष्णीषा ऋत्विजः प्रचरन्ति
(The priests are moving wearing red turbans ) T16
वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः (!)
(The cloud gets satisfection,
let the bestower of corns pleases forever) T3
शङ्खाः श्रूयन्ते (The conchs are being heared) T14
शृणु गर्जति मेघो (Hear the cloud roars) T6/ T12/ T13
सोष्णीषा ऋत्विजः प्रचरन्ति
(The priests are moving wearing turbans ) T10
स्वर्गङ्गामवगाहते (Takes bath in the heavenly Ganges) T16
स्वर्गो ध्वस्तः शिखी ध्वस्त (The heaven is destroyed and so also the pea-cock) T12-c
हंसीव कृष्ण ते कीर्तिः
(O krishna ! your fame is as white as swan) T6/T16/T16-c
हंसीव धवला कीर्तिः
(The fame is as white as swan) T15
हरेर्दशावताराः (Ten incarnations of हरि i.e. lord विष्णु) T3

# Appendix - 9

## Glossary of Technical Terms used ( प्रयुक्त -पारिभाषिक-पद)

(अ)

अतियुक्तप्रयोग (Exagerative usage) T14
अध्याहार (Supplying an element which is not there) T1
अनुपपत्ति (contingency) T3/T7/T11/T16
अनेकतिङन्त (Having more than one words ending with तिङ्) T5
अनेकसुबन्त (Having more than one words ending with सुप्) T5
अन्वय (relation between two positive entities) T3/T5/T6/T7/T9/T10/T12/T13/T15/T16
अन्वयबोध (Understanding of अन्वय) T5/T7/T9/T15/T16
अन्वयिन् (Relatum) T10
अप्रथमा (Other than the Nominative case) T2
अभेदातिरिक्तसम्बन्ध (Other than identical relationship) T5
अयोग्यता (Lack of compatibility) T3
अर्थवत्त्व (Meaningfulness) T3
अवच्छेदक (Delimitor) T7/T16
अविवक्षित (Not intended by the speaker) T3
अव्याप्ति (Narrow application) T6

(आ)

आख्यात (Personal suffix or linguistic element that expresses function or व्यापार) T7/T8/T9/T15/T16
आख्यातार्थ (meaning of the element expressing function) T9
आपत्ति (Contingency or objection or entering into condition) T2/T4/T6/T15
आश्रय (Substratum, Relation of Dependance) T2/T4/T16

(इ)

इष्टसाधन (Means or cause of desired object) T10

इष्टापत्ति (Desired contingency) T7/T11/T15

(उ)

उत्सर्ग (general rule; perceiving repeatedly : भूयोदर्शनमुत्सर्गः;
more doubt : अधिककोटिसंशय एवोत्सर्गः) T7
उपमान (Means of analogical cognition) T16
उपमेय (Object to be compared) T16
उपस्थाप्य (the state of cause of rememberance) T7/T15/T16
उपस्थिति (Remembrance or knowledge) T4/T7/T9/T15/T16

(ए)

एकतिङ् वाक्यम् (Expression possesing one verbal form is a sentence) T1
एकतिङन्तार्थ (Meanings of the expressions containing one verbal form) T1
एकवाक्यता (The property of being one sentence) T1
एकवाक्यत्व (The property of being one sentence) T3/T5

(क)

कर्तरि (Active voice) T8/T9
कर्म (Acccusative case; object; action) T2/T3/T5/T6
कर्मक (Possessing accusative case) T3
कर्मत्व (the state of being an action or an object) T6/T13/T14
कर्मता (Acccusativeness) T3/T5/T10
कारण (Cause) T9/T16
कार्य (effect) T9/T16
कार्यकारणभाव (Cause and effect relationship) T9/T16
क्रिया (Action, verbal activity, verbal form) T4/T5/T9/T10/T11
क्रियान्तर (Other action) T8
क्रियाध्याहार (Supply of a verb or an action) T11
क्रियापदाध्याहार (Supply of verbal form) T1/T2
क्रियान्वय (Syntactic relationship with verbal form) T6
क्रियापद (Verbal word, verbal form) T1/T2
क्रियाविनिर्मुक्त वाक्य (Verbless sentence) T1/T4

(ग)

गौरव (Prolixity, cumbersomeness, heavyness) T2

(ज)

ज्ञान (Cognition, experience, knowledge) T9

(त)

तात्पर्य (Intention of the speaker) T16
तात्पर्यविषयपरामर्शिन् (That which considers the intention of the speaker) T16
तिङन्त (Ending with verbal suffix तिङ्) T1/T3/T5/T9
तिङन्तसमूह (Collection of words ending with verbal suffix) T3
तिङन्तार्थ (Meaning of words ending with verbal suffix) T1

(द)

दर्शनक्रिया (दर्शन or 'seeing' as an action) T10
दर्शनाश्रय (Substratum of the action 'seeing') T3
दृशिक्रिया (दृश् or 'to see' as action) T9
द्वितीया (Accusative case-ending) T2

(ध)

धात्वर्थ (Meaning of the root) T5/T9
धावनकर्तृक (That having धावन or running as its agent) T3
धावनकृतिविशिष्ट-मृग (The deer qualified by the volition of the action running) T5
धावनक्रिया (धावन or running as action)

(न)

नाम (Name, stem, base) T9
नामार्थ (Meaning of Noun) T5/T8
नियम (A rule, invariable concomitance, Limitative) T7

नियामक (Delimitor) T11
निरूपित (described) T9
निषेध (Prohibition) T3/T12
निष्क्रिय (वाक्य) (verbeless sentence) T3
न्याय (maxim, the sentence which explains intended meaning) T14

(प)

पद (Word; A minimum meaningful unit of language) T1/T7/T14/T16
पदजन्य (Caused or generated by a word) T7/T14/T16
पदजन्योपस्थिति (Remembrance caused by word) T7/T14/T16
पदसमूह (Collection of words) T1
पदार्थ (Word meaning or Content of valid knowledge or Individual) T7/T13/T16
पदार्थता (Categoryness) T7/T16
पदार्थतावच्छेदक (Delimitor of Categoryness) T7/T16
परामर्श (Consideration; immediately preceding cause of अनुमिति i.e. inferential knowledge) T4/T7/T16
पर्यायशब्द (Alternative word or Synonym) T11
प्रकारक (that which differentiates something from other) T7/T9/T15/T16
प्रकारता (The qualifierness) T9
प्रकारतानिरूपित (described by the qualifierness) T9
प्रकृति (The original; Base of a word which is used in language by the addition of affixes. Such words are of three kinds described in grammar : धातु or roots, प्रातिपदिक or noun bases and प्रत्यय or suffixes ) T9
प्रत्यय (Suffix; knowledge) T9
प्रत्ययजन्योपस्थिति (The remembrance or understanding generated by the Suffixes ) T9
प्रत्ययार्थप्राधान्य (Predominance of the suffix-meaning) T9
प्रथमपुरुष (Third person) T1
प्रथमा (Nominative case-affix) T2/T6/T8/T10/T13/T14/T15/T16

(ल)

लट् (A class of verbal suffixes denoting present tense, A metalinguistic term coined by पाणिनि) T3

लट्-प्रत्ययान्त (A form ending with लट्- suffixes) T3

लडर्थ (The meaning of लट्- suffixes) T3

लिङ्ग (Gender and probandum or reason) T16

(व)

वचन (Number) T16

वर्तमान (Present Time) T3/T9

वर्तमानसामीप्य (Nearness of the Present Time) T3

वाक्य (Sentence i.e. collection of words having expectancy, proximity and compatibility) T1/T2/T3/T4/T5/T6/T11

वाक्यभेद (Sentence - split) T2/T3

वाक्यार्थ (The sentence-meaning i.e. the relation among the meanings that are understood from the words) T3/T5/T8

वाक्योच्छेद (Discarding or excluding of sentences) T2

विधि (Statement which prompts action) T12/T13

विभक्ति (Case-affix, Case-ending) T14

विवक्षा (Intention by speaker) T5/T6

विवक्षित (Intended by speaker) T9

विशेषण (Qualifier or that which differenciates) T4/T5/T7/T9/T12/ T15/T16

विशेषणता (Qualifierness) T10

विशेष्य (Qualificand) T2/T4/T16

विशेष्यक (Qualificand) T1/T9

विशेष्यता (Qualificandness) T7/ T9/T15/T16

विशेष्यतासम्बन्ध (Relationship of ualificandness) T9

विशेष्यान्वयिन् (That which relates the qualificand) T10

वैयर्थ्य (The state of being redundant) T3

वैरस्यापादक (Remover of the absence of sentiment i.e. making something interesting) T16

# Appendix - 10

## The commentator's statements in the support of Grammarian's views and in refutation of *Nyāya* - views

1. शृणु गर्जति मेघ इत्यत्र गर्जनाश्रयमेघकर्मकश्रवणाश्रयस्त्वमिति नैयायिकमते बोधः स च न सम्भवति। शब्दस्यैव श्राव्यत्वेन मेघस्याश्राव्यत्वात् । T6-c

- मेघाभिन्नैकाश्रयवृत्तिगर्जन-कर्मकश्रावणं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः. स च समीचीन एव। T6-c

2. नटो गायति श्रृण्वित्यत्र गानाश्रयनटकर्मकश्रावणाश्रयस्त्वमिति तार्किकमते बोधः। स च न सम्भवति नटस्याश्राव्यत्वात्। T6-c

- नटाभिन्नैकाश्रयवृत्ति-गानकर्मकश्रवणं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च यथार्थ एव T6-c

3. घटोऽनश्यत्पश्येत्यत्र चातीतोत्पत्तिकनाशप्रतियोगिघटकर्मक-दर्शनाश्रयस्त्वमिति न्यायमते बोधः। स च न सम्भवति घटस्य नष्टत्वे न तद्दर्शनासम्भवात् T6-c

- पटाभिन्नैक- प्रतियोगिकातीतोत्पत्तिक- नाशविषयकदर्शनं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च प्रमैव /T6-c

4. धात्वर्थनिष्प्रकारतानिरूपित-विशेष्यासम्बन्धेनान्वयबुद्धिं प्रति विशेष्यतया प्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावेन दर्शने प्रत्ययजन्योपस्थितिरभावेन धावनस्य तत्रान्वयो न सम्भवतीति मृगस्यैव तत्रान्वयेन तार्किकपक्ष एव समीचीन इति चेन्न T6-c

5. ननु वैयाकरणमतेऽपि मृगस्याभेदसम्बन्धेन तिङर्थविशेषणत्वेनतदुपस्थाप्यसंख्यान्वयः कथमिति चेन्न, तन्मते तथा कार्यकारणभावानङ्गीकारात् T7-c

6. तथा च न्यायमते तत्र तत्राव्याप्तिरेवेति T6-c

7. फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।। T7-c

# Appendix - 11

## A List of other Sanskrit works related to वाक्य

वाक्यसुधा by शङ्कराचार्य (वेदान्त)

वाक्यसुधा (वेदान्त)

वाक्यार्थसुधाटीका

वाक्यवृत्ति by शङ्कराचार्य (वेदान्त)

वाक्यवृत्ति - तर्कसंग्रहटीका

वाक्यानुमान

वाक्यार्थचन्द्रिका by कृष्णम्भट्)

वाक्यतत्त्व by सिद्धान्तपञ्चानन

वाक्यार्थचन्द्रिका (वेदान्त)

वाक्यसंग्रह (वेदान्त)

वाक्यसार (वेदान्त)

वाक्यामृत by सुन्दरगणि

वाक्यामृत by तुलजराज

वाक्यार्थदर्पण (वेदान्त)

वाक्यार्थबोध (वेदान्त)

वाक्यार्थदीपिका (वेदान्त)

वाक्यप्रकरण by शिवयोगेन्द्र (वेदान्त)

वाक्यप्रकाश by हर्षकुलाग्रणी

वाक्यभेददोष by अनन्तदेव

वाक्यमाला (तत्त्वविवेकदीपनव्याख्या)

वाक्यरत्न by केशव quoted in his अलङ्कारशेखर

# Appendix -12

## Puṇyarāja's Kārikās on the concept of sentence

(Composed as a synopsis of the conents of second *Kāṇḍa* of Vākyapadīya and placed at the end of the commentary)

वाक्यानामष्टधैवादो विभागः परिक्रीर्तितः।
शास्त्रीयमीमांसकयोः कीर्तनं वाक्ययोस्ततः।।1।।

(Vākyānāmaṣṭadhaivādo vibhāga: parikrīrtitaḥ.
Śāstrīyamīmāṃsakayoḥ kīrtanaṃ vākyayostataḥ..)

बलाबलविचारोऽपि शास्त्रीयो व्याप्तिनिर्णयात्।
ततश्चात्र समासेन वाक्यलक्षणनिर्णयः।।2।

(Balābalavicāro'pi śāstrīyo vyāptinirṇayāt.
Tataścātra samāsena vākyalakṣaṇanirṇayaḥ..)

सन्देहश्चागमेनापि वाक्यभेदस्य दर्शितः।
स्फोट एव तु सिद्धान्ते वाक्यं वाक्येषु साधितम्।।3।।

(Sandehaścāgamenāpi vākyabhedasya darśita:.
Sphoṭa eva tu siddhānte vākyaṃ vākyeṣu sādhitam..)

पदवादस्त्वनुमतो नेति व्याकरणे स्थितम्।
ततोऽन्विताभिधानस्याभिहितान्वयकस्य च।।4।।

(Padavādastvanumato neti vyākaraṇe sthitam.
Tato'nvitābhidhānasyābhihitānvayakasya ca..)

शब्दभागार्थभागाभ्यां दूषणव्रातकीर्तनम्।
प्रसङ्गेनापरेऽप्यत्र वाक्यार्थाः षट् प्रदर्शिताः।।5।।

(Śabdabhāgārthabhāgābhyāṃ dūṣaṇavrātakīrtanam.
Prasaṅgenāpare'pyatra vākyārthā: Ṣaṭ Pradarśitāḥ..)

अखण्डवाक्यपक्षे च चोद्यपञ्चककीर्तनम्।
उपपत्तिः प्रतिनिधेर्नास्तीति प्रथमं यथा।।6।।

(Akhaṇḍavākyapakṣe ca codyapañcakakīrtanam.
Upapatti: pratinidhernāstīti prathamaṃ yathā..)

पिकादिपदसन्देहो नोपपद्यत इत्यपि।
श्रुतिवाक्यविरोधे तु श्रुतिरेव बलीयसी।।7।

(Pikādipadasandeho nopapadyata ityapi.
Śrutivākyavirodhe tu śrutireva balīyasī..)

प्रतिष्ठितस्य न्यायस्याप्येवं त्यागः प्रसज्यते।
अवान्तराणां वाक्यानामुपपत्तिर्विरुध्यते।।8।।

(Pratiṣṭhitasya nyāyasyāpyevaṃ tyāgaḥ prasajyate.
Avāntarāṇāṃ vākyānāmupapattir virudhyate..)

प्रासङ्गिकादिषु तथा लक्षणेष्वप्यसंभवः।
प्राप्नोत्येवमखण्डेऽस्मिन् वाक्ये दोषा उदाहृताः।।९।।

(Prāsaṅgikādiṣu tathā lakṣaṇeṣvapyasambhavaḥ.
Prāpnotyevamakhaṇḍe'smin vākye doṣā udāhṛtāḥ..)

अपोद्धारं समाश्रित्य दोषास्त्वेते निराकृताः।
संहितायां विभागेऽथ पदयोर्विलयं गते।।10।।

(Apoddhāraṃ samāśritya doṣāstvete nirākṛtāḥ.
Saṃhitāyāṃ vibhāge'tha padayorvilayaṃ gate..)

उपादायावधिं कर्तुं तयोरर्थः प्रकल्प्यताम्।
इति दूषणमत्राधात् पदे वाक्ये च वाक्यवित्।।11।।

(Upādāyāvadhiṃ kartuṃ tayorarthaḥ prakalpyatām.
Iti dūṣaṇmatrādhāt pade vākye ca vākyavit..)

तन्त्र-न्यायवशादत्र स्वपक्षे दोषसंवृतिः।
वाक्यार्थस्यात्र भेदोऽपि विकल्प्य परिकल्पितः।।12।।

(Tantra-nyāyavaśādatra svapakṣe doṣasaṃvṛtiḥ.
Vākyārthasyātra bhedo'pi vikalpya parikalpitaḥ..)

प्रतिभेदं च सिद्धान्ते वाक्यार्थ उपपादितः।
प्रविभागाश्रयादत्र पदार्थस्यापि संभवः।।13।।

(Pratibhedaṃ ca siddhānte vākyārtha upapāditaḥ.
Pravibhāgāśrayādatra padārthasyāpi sambhavaḥ..)

स च द्वादशधा भिन्न इत्यप्यत्रोपपादितम्।
प्रतिभालक्षणं सम्यग्विधातुं संहितं कृतम्।।14।।

(Sa ca dvādaśadhā bhinna ityapyatropapāditam.
Pratibhālakṣaṇaṃ samyagvidhātuṃ saṃhitaṃ kṛtam..)

पदभागार्थभागाश्च वितत्य प्रतिपदिताः ।
अन्वयव्यतिरेकाभ्यां विविक्ततोपपादिता ।।15।।

(Padabhāgārthabhāgāśca vitatya pratipaditāḥ.
Anvayavyatirekābhyāṃ viviktatopapāditā..)

सनिमित्ता च साऽप्यत्र नामाख्यातसमाश्रया ।
उपसर्गनिपाताश्च कर्मप्रवचनीयकाः ।।16।।

(Sanimittā ca sā'pyatra nāmākhyātasamāśrayā.
Upasarganipātāśca karmapravacanīyakāḥ..)

पदभेदाः प्रसङ्गेन लक्षणेनोपलक्षिताः ।
सार्थकानर्थकत्वाभ्यां विचारे वर्णनिष्ठिते ।।17।।

(Padabhedā: prasaṅgena lakṣaṇenopalakṣitāḥ.
Sārthakānarthakatvābhyāṃ vicāre varṇaniṣṭhite..)

कृतेऽप्यखण्डपक्षोऽत्र प्रतिष्ठामुपनायितः ।
पदवादेऽथ दोषाणां चतुर्णां परिकीर्तनम् ।।18।।

(Kṛte'pyakhaṇḍapakṣo'tra pratiṣṭhāmupanāyitaḥ.
Padavāde'tha doṣāṇāṃ caturṇāṃ parikīrtanam..)

समासेषु विरुद्धार्थप्राप्तिरादावुदाहृता ।
अध्यादीनां तथा वाक्ये साधनस्याभिधायिता ।।19।।

(Samāseṣu viruddhārthaprāptirādāvudāhūtā.
Adhyādīnāṃ tathā vākye sādhanasyābhidhāyitā..)

अर्थासङ्गतिरप्यत्र बहुव्रीहेरुदाहृता ।
प्रज्ञुसंज्ञ्वादिषु तथा नास्त्यर्थोऽवयवेष्वपि।।20।।

(Arthāsaṅgatirapyatra bahuvrīherudāhṛtā .
Prajñusañjñvādiṣu tathā nāstyartho'vayaveṣvapi..)

इति चोद्यचतुष्केण पदवादः पराकृतः।
स्थापितेऽखण्डपक्षेऽपि चोद्यसप्तकमाहितम्।।21।।

(Iti codyacatuṣkeṇa padavādaḥ parākṛtaḥ.
Sthāpite'khaṇḍapakṣe'pi codyasaptakamāhitam..)

द्वन्द्वे समासे नैव स्याद्बह्वर्थस्याभिधायिका।
विभक्तिरिति दोषोऽत्र प्रथमं परिकीर्तितम्।।22।।

(Dvandve samāse naiva syādbahvarthasyābhidhāyikā.
Vibhaktiriti doṣo'tra prathamaṃ parikīrtitam..)

वाक्यस्यार्थसमाप्तिस्तु प्रत्येकं नोपपद्यते।
परामर्शश्च नैव स्यात् सर्वनामभिरेव च।।23।।

(Vākyasyārthasamāptistu Pratyekaṃ nopapadyate.
Parāmarśaśca naiva syāt sarvanāmabhireva ca..)

अनुष्ठानं क्रमेणाथ वाक्यार्थस्य न जातुचित्।
स्यादक्रमे त्वनुष्ठानं शक्यते न कथञ्चन।।24।।

(Anuṣṭhānaṃ krameṇātha vākyārthasya na jātucit.
Syādakrame tvanuṣṭhānaṃ Śakyate na kathañcana..)

एकदेशस्य करणे समुदायेऽर्थकारिता।
अभिमन्यत इत्येतदखण्डे नोपपद्यते।।25।।

(Ekadeśasya karaṇe samudāye'rthakāritā.
Abhimanyata iyetadakhaṇḍe nopapadyate..)

एतानि पञ्च चोद्यान्यपोद्धारस्य समाश्रयात्।
समर्थितानि वै सम्यगखण्डं वाक्यमिच्छता।।26।।

(Etāni pañca cọdyānyapoddhārasya samāśrayāt.
'Samarthitāni vai samyagakhaṇḍaṃ vākyamicchatā..)

अथाखण्डं यदा वाक्यं समासेष्वर्थवर्णना।
पृथक् पृथक् तदा तस्याः सा च शास्त्रे प्रकीर्तिता।।27।।

(Athākhaṇḍaṃ yadā vākyaṃ samāseṣvarthavarṇanā.
Pṛthak pṛthak tadā tasyāḥ sā ca śāstre prakīrtitā..)

नञ्-समासे पदार्थस्य विकल्पैर्बहुभिः पुनः।
प्राधान्यं परिकल्प्याथ भाष्ये पक्षाः परीक्षिताः।।28।।

(Nañ - samāse padārthasya vikalpairbahubhiḥ punaḥ.
Prādhānyaṃ parikalpyātha bhāṣye pakṣāḥ parīkṣitāḥ..)

यद्यखण्डमिदं वाक्यं नैषा स्यात् कल्पना क्वचित्।
दोषावेतावपि शब्दप्रक्रियामात्रमेव च।।29।।

(Yadyakhaṇḍamidaṃ vākyaṃ naiṣā syāt kalpanā kvacit.
Doṣāvetāvapi śabdaprakriyāmātrameva ca..)

शास्त्रप्रवृत्ताविति च निराकरणमेतयोः।
ततश्चाखण्डपक्षस्य स बाध उपदर्शितः।।30।।

(Śāstrapravṛttāviti ca nirākaraṇametayoḥ.
Tataścākhaṇḍapakṣasya sa bādha ppadarśitaḥ..)

जहत्स्वार्थविकल्पेन बहुव्रीह्यादिगामिना।
प्रत्युत प्रज्ञुदोषश्च पदवादे प्रकीर्तितः।।31।।

(Jahatsvārthavikalpena bahuvrīhyādigāminā.
Pratyuta prajñudoṣaśca padavāde prakīrtitaḥ..)

प्रकृत्यर्थः प्रत्ययार्थः इति भिन्नौ परस्परम्।
यावत् स्थितौ तयोरेकोपायेनावगतिः कथम्।।32।

(Prakṛtyarthaḥ pratyayārthaḥ iti bhinnau Parasparam.
Yāvat sthitau tayorekopāyenāvagatiḥ katham..)

इहाहं नास्तीति च सा दृष्टा स्याद्वास्तवे कथम्।
पदार्थं प्रति दोषोऽयं पदवादे समुद्धृतः।।33।।

(Ihāhaṃ nāstīti ca sā dṛṣṭā Syādvāstave katham.
Padārthaṃ prati doṣo'yaṃ padavāde samuddhūtaḥ..)

प्रत्ययद्वयगम्येऽर्थे एकस्मादेव तन्मते।
अत्तीत्यादौ कथं च स्यात् सत्यता पदपद्धतेः।।34।।

(Pratyayadvayagamye'rthe ekasmādeva tanmate.
Attītyādau kathaṃ ca syāt satyatā padapaddhateḥ..)

सत्यत्वेऽथ पदानां स्यात् प्रकृतिप्रत्ययार्थयोः।
कथं लक्षणशास्त्रेषु साङ्कर्येण व्यवस्थितिः।।35।।

(Satyatve'tha padānāṃ syāt prakṛtipratyayārthayoḥ.
Kathaṃ lakṣaṇaśāstreṣu sāṅkaryeṇa vyavasthitiḥ..)

पदार्थमन्यथैवादौ प्रतिपद्यान्यथा पुनः।
वाक्यार्थप्रतिपत्तिश्च दृष्टा नैतत् समञ्जसम्।।36।।

(Padārthamanyathaivādau pratipadyānyathā punḥ.
Vākyārthapratipattiśca dṛṣṭā naitat samañjasam..)

सत्यभूतेष्वथ पदेष्विति वाक्यविदो जगुः।
नञर्थानुपपत्तेश्च नास्तिवादः पदाश्रयः।।37।।

(Satyabhūteṣvatha padeṣviti vākyavido jaguḥ.
Nañarthānupapatteśca nāsti vādaḥ padāśrayaḥ..)

उपात्तत्यागसंप्राप्तेः सर्वत्रेति च दूषणम्।
सह प्रागुक्तदोषैश्चाप्येकादश समीरिताः।।38।।

(Upāttatyāgasamprāpteḥ sarvatreti ca dūṣaṇam.
Saha prāguktadoṣaiścāpyekādaśa samīritāḥ..)

पदवादेऽत्र दोषास्तु पृथक् पक्षद्वयं पुनः।
शब्दभागार्थभागाभ्यां विस्तरेण विचक्षणैः।।39।।

(Padavāde'tra doṣāstu pṛthak pakṣadvayaṃ punaḥ.
Śabdabhāgārthabhāgābhyāṃ vistareṇa vicakṣaṇaiḥ..)

निराकृतमतो युक्तो वाक्यवादपरिग्रहः।
दोषः संज्ञिन्यतिक्रान्तः सूत्रकाराभिसंमतः।।40।।

(Nirākṛtamato yukto vākyavādaparigrahaḥ.
Doṣa: sañjñinyatikrāntaḥ sūtrakārābhisammataḥ..)

अपोद्धाराश्रयादत्र गौणमुख्यविचारणा।
ततः कृता सुनिपुणं टीकाकारेण सादरम्।।41।।

(Apoddhārāśrayādatra gauṇamukhyavicāraṇā.
Tataḥ kṛtā Sunipuṇaṃ Ṭīkākāreṇa sādaram..)

सत्यासत्यविभागोऽपि ज्ञानानामुपपादितः।
मुख्यनान्तरीयकयोरर्थयोरविवर्तनम्।।42।।

(Satyāsatyavibhāgo'pi jñānānāmupapāditaḥ.
Mukhyanāntarīyakayorarthayoravivartanam..)

ततस्त्वर्थचतुष्कस्य चिन्तनं विहितं क्रमात्।
शब्दार्थनिर्णयोपायाः सादरं परिकीर्तिताः।।43।।

(Tatastvarthacatuṣkasya cintanaṃ vihitaṃ kramāt.
Śabdārthanirṇayopāyā sādaraṃ parikīrtitā..)

तात्पर्यं परिपाट्याश्चार्थतात्पर्यमपीति च।
वाक्यनिष्ठं समासेन विचारितमतः पृथक्।।44।।

(Tātparyaṃ paripāṭyāścārthatātparyamapīti ca.
Vākyaniṣṭhaṃ samāsena vicāritamataḥ Pṛthak..)

उत्सर्गस्यापवादस्य विवेकः परिकीर्तितः।
संज्ञाशब्देष्वथ कृतो निर्णयः परिवत्सरान्।।45।।

(Utsargasyāpavādasya vivekaḥ parikīrtitaḥ.
Sañjñāśabdeṣvatha kṛto nirṇayaḥ parivatsarān..)

प्रत्येकं समुदाये च समाप्या वाक्यनिश्चितिः।
न्यायः संचिन्तितश्चात्र लक्षितोऽप्यभिधीयते।।46।।

(Pratyekaṃ samudāye ca samāpyā vākyaniściti.
Nyāyaḥ sañcintitaścātra lakṣito'pyabhidhīyate..)

अथ पूर्वोक्तसंक्षेपद्वारेणाप्युपपादितः।
वाक्यवाक्यार्थनिष्ठश्च पदनिष्ठश्च निर्णयः।।47।।

(Atha pūrvoktasaṅkṣepadvāreṇāpyupapāditaḥ.
Vākyavākyārthaniṣṭhaśca padaniṣṭhaśca nirṇayaḥ..)

वाक्यैकवाक्यतायाश्च विचारोऽपि निरूपितः।
साकाङ्क्षत्वं निराकाङ्क्षा वाक्यानां परिकीर्तिता।।48।।

(Vākyaikavākyatāyāśca vicāro'pi nirūpitaḥ.
Sākāṅkṣatvaṃ nirākāṅkṣā vākyānāṃ parikīrtitā..)

यद्वा चिन्ता समासेऽपि तत्तद्वस्तुनिरूपिता।
अथात्र तन्त्रन्यायस्य सिद्धिर्भाष्यानुगा स्मृता।।49।।

(Yadvā cintā samāse'pi tattadvastunirūpitā.
Athātra tantranyāyasya siddhirbhāṣyānugā smṛtā..)

अवतारोऽपि भाष्यस्य संग्रहेऽस्तमुपागते।
निबन्धहेतौ शास्त्रस्य टीकाकारेण कीर्तितः।।50।।

(Avatāro'pi bhāṣyasya saṅgrahe'stamupāgate.
Nibandhahetau śāstrasya Ṭīkākāreṇa kīrtitaḥ..)

संग्रहार्थाद्यनुगुणरूपत्वं चोपपादितम्।
विप्लावनमथैतस्य संग्रहप्रतिपक्षतः।।51।।

(Saṅgrahārthādyanuguṇarūpatvaṃ copapāditam.
Viplāvanamathaitasya saṅgrahapratipakṣataḥ..)

कृतमाचार्यदैवज्ञैरावेशविवशैस्ततः।
भ्रष्टस्याम्नायसारस्य वैयाकरणगामिनः।।52।।

(Kṛtamācāryadaivajñairāveśavivaśaistataḥ.
Bhraṣṭasyāmnāyasārasya vaiyākaraṇagāminaḥ..)

मूलभूतमवाप्याथ पर्वतादागमं स्वयम्।
आचार्यवसुरातेन न्यायमार्गान् विचिन्त्य सः।।53।।

(Mūlabhūtamavāpyātha parvatādāgamaṃ svayam.
Ācāryavasurātena nyāyamārgān vicintya saḥ..)

प्रणीतो विधिवच्चायं मम व्याकरणागमः।
मयाऽपि गुरुनिर्दिष्टाद् भाष्यान्न्यायाविलुप्तये।।54।।

(Praṇīto vidhivaccāyaṃ mama vyākaraṇāgamaḥ.
Mayā'pi gurunirdiṣṭād bhāṣyānnyāyāviluptaye..)

काण्डत्रयक्रमेणायं निबन्धः परिकीर्तितः।
ग्रन्थकारेण ग्रन्थेऽस्मिन् स्वस्मिन् गुर्वागमः स्फुटम्।।55।।

(Kāṇḍatrayakrameṇāyaṃ nibandhaḥ parikīrtita:.
Granthakāreṇa granthe'smin svasmin gurvāgamaḥ sphuṭam..)

इत्येवं वाक्यकाण्डस्य प्रमेयविषयाः स्फुटम्।
सङ्गतिः कीर्तिता लघ्वी समासेन निराकुला।।56।।

(Ityevaṃ vākyakāṇḍasya prameyaviṣayāḥ sphuṭam.
Saṅgati: kīrtitā laghvī samāsena nirākulā..)

विद्वज्जनानां (......) यः खलु सर्वत्र गीयते जगति।
तत उपसृत्य विरचिता राजानकशूरवर्मनाम्ना वै।।57।।

(Vidvajjanānāṃ (......) ya: khalu sarvatra gīyate jagati.
Tata upasṛtya viracitā rājānakaśūravarmanāmnā vai..)

शशाङ्कशिष्याच्छ्रुत्वैतद्वाक्यकाण्डं समासतः।
पुण्यराजेन तस्योक्ता सङ्गति कारिकाश्रिता।।58।।

(Śaśāṅkaśiṣyācchrutvaitadvākyakāṇḍaṃ samāsata:.
Puṇyarājena tasyoktā saṅgati kārikāśritā..)

गुरवे भर्तृहरये शब्दब्रह्मविदे नमः।
सर्वसिद्धान्तसन्दोहसारामृतमयाय च।।59।।

(Gurave bhartūharaye Śabdabrahmavide namaḥ.
Sarvasiddhāntasandohasārāmṛtamayāya ca..)

(पुण्यराजेन प्रस्तुतः एकोनषष्टि-कारिकासु वाक्यपदीयस्य द्वितीयकाण्डस्य विषयसारांशः प्रस्तुतः। स च परिशीलनीयः। भर्तृहरिप्रणीतं वाक्यपदीयम्, सम्पा. के.वी. अभ्यङ्करः, वी.पी. लिमाये, पुणे विद्यापीठम्, पुणे, १९६५, परिशिष्टम् - २, पृ. १९३-१९६)

# Appendix - 13

## Bibliography


***Pāṇini Kā Samarthasiddhānta Our Vākyavyutpādana*,**

V.K.S. Iyyanger, Gaveṣaṇā - 48, pp. 47 - 58, 1986

***Vākya* according to the *Munitraya* of Sanskrit grammar,**

G. V. devasthali, Charudev Shastri Felicitation Vol., ed. S.K. Chaterji, pp. 206-215, 1974

***Śleṣātmaka Bhāratīya Bhāṣāoṃ Meṃ Vākya*,**

K. Subrahmanya, Vākyapariśīlana, SV.XXV, 1-2 : 1

***Vyākaraṇa-Nyāya-Mīmāṃsā-Matānusāreṇa Vākya- Svarūpam*,**

Peri Suryanarayan Shastri, PAIOC, 29th Session, pp. 487-490, 1980

**Some Evalutionary aspects of Vākyabheda,**

S. G. Moghe, Charudev Shastri Felicitation, JGJRI, XXXVII, 1-4, pp. 169-188, 1981

**Bhaṭṭadīpikā of Khanadadeva,** Vol. 1,

Govt oriental library series, Bibliothecs Sanskrit -3, Mysore, 1908.

***Mahābhāṣya* of Patañjali,**

ed F. Kielhorn, Rev. ed. K.V. Abhyankar, Bhandarkar Sanskrit Series, BORI, Poona, 1962 (Vol.1)

***Tattvacintāmaṇi*** of Gangesopadhyaya (Śabdakhaṇḍa)

with comms. of Bibliotheca Indica, Calcutta - 1901.

***Vākyapadīya*** of Bhartṛhari (3rd *Kāṇḍa*, Pt.2)

with comm. Prakīrṇaprakāśa of Helārāja, ed.Ravi varma, L.A. Univ. of Travancore, 1942).

***Paramalaghumañjuṣā*** with comm. Bhāvaprakāśikā and Bālabodhanī, Ed. Jayasankarlal Tripathi, Kṛṣṇadāsa Sanskrit series-50, Varanasi 1985.

***Vaiyākaraṇasiddhāntamañjuṣā*** with the comm. Kuñjikā of Durvalācārya and Kala of Ballamabhaṭṭa, Chaukhamba 4 Sanskrit Series, Varanasi

***Vaiyākaraṇasiddhāntamañjuṣā***, ed. Kalika Prasad Shukla, Sampoornanand Sanskrit University, Varanasi, 1977

***Vaiyākaraṇabhūṣaṇa***, ed V. N. Mishra, Bharatiya Vidya Prakashan, Delhi,1987.

***Vaiyākaraṇabhūṣaṇasāra*** with ***Darpaṇa***

and Hindi Bhāṣya of B.D. Dwivedi, Chowkhamba Orientalia, Varanasi. 1985.

***Bhūṣaṇasārasamīkṣā***, K. V. Ramakrishnamacharya, Raghav Prakashan, Tirupati, 1996

***Vyākaraṇamahābhāṣya* of Patañjali,**

Ed. with Translation and Notes by S. D joshi (*Samarthāhnika*) Univ.of Poona, Pune,1967

***Vākyapadīya* of Bhartṛhari**

with the comm. *Prakīrṇaprakāśa* of Helārāja, Ed. Ravi Varma L. A. Univ od Travancore,1942.

***Siddhāntakaumudī* of Bhaṭṭojī** Ed. with Translation and Notes by S. C. Vasu, Vol.I, MLBD.Varanasi. 1962.

**Current issues in linguistic theory :** Chomsky, Noam (1964):

In J. A. Fodor and J. J. Katz (Eds.), The structure of language : Readings in the philosophy language (pp. 91-112). Englewood Cliffs, N. J: Prentice-Hall.

**The sound pattern of English :** Chomsky, Noam; and Halle, Morris. (1968): New York: Harper & Row.

**The aims of autosegmental phonology** by Goldsmith, John A. (1979): . In D. A. Dinnsen (Ed.), Current approaches to phonological theory (pp. 202-222). Bloomington:Indiana University Press.

***Aṣṭādhyāyīsūtrapāṭhaḥ***,

Motīlāl Banārasīdās, New Delhi, Prathamasaṃskaraṇam, 1997

***Vyākaraṇamahābhāṣyam*, Ed. K.V. Abhyankar,**
Bhaṇḍārakara Prācyavidyā- Śodhasaṃsthānam, Pune, 1975

***Vyākaraṇamahābhāṣyam*** (*Samarthāhnika)* Joshi S.D & Roodbergen J.A.F. , University of Pune, Pune, 1968

***Tarkasaṅgrahaḥ* (*Dīpikāsahitaḥ*)**
Śrī Rāmakṛṣṇamaṭha, Milāpora, Cennai, 1994, Pṛ.67

***Śabdaśaktiprakāśikā* of** Jagadīśa (with comm. Kṛṣṇakānti, Kashi Sanskrit series - 109, Benaras, 1934

***Vākyapadīyam* of Bhartṛhari** (3rd Kāṇḍa, Pt.2) with comm. Prakīrṇaprakāśa of Helārāja, ed.Ravi Varma, L.A. Univ. of Travancore, 1942

***Vyākaraṇa Kī Dārśanikabhūmikā*,** Satyakāma Varmā Munsiram Manoharlal, Delhi, 1971

**A Dictionary of Sanskrit Grammar,** Gaikwad Oriental Series, Oriental Institute, Baroda, 1977

**Dictionary of *Nyāya* Terms,· V. N. Jha,**
Centre of Advanced Study in Sanskrit, University of Pune, 2001

**Studies on Sanskrit Grammar and Grammatical Concepts,**
Banamali Biswal, Padmaja Prakashan, 57, Vasant Vihar, Jhusi - Allahabad - 211019, 2007

**Patañjali : As a philosopher and Grammarian,** Banamali Biswal, Padmaja Prakashan, 57, Vasant Vihar, Jhusi - Allahabad - 211019, 2003

**Vākyapadīya of Bhartṛhari,** Ed. K.V. Abhyankar & V. P. Limaye, Poona, 1965

**Studies on Sanskrit Grammar and Grammatical concepts,** Banamali Biswal, Padmaja Prakashan, 57, Vasant Vihar, Jhusi - Allahabad - 211019, 2006

**Vyakaranatattvalochanam,** Banamali Biswal, Padmaja Prakashan, 57, Vasant Vihar, Jhusi - Allahabad - 211019, 2006

***Mahābhāṣya* of Patañjali,** with Kaiyaṭa's *Pradīpa* and Nāgeśa's *Udyota*, (Navāhnikam), Ed. B. B. Joshi, (Fifth Edn.), Bombay, 1951

**Evolution of Sanskrit language from Pāṇini to Patañjali -**

Laddu, S.D. : CASS, University of Poona, 1974

**Word Index to Patañjali's *Mahābhāṣya*** - Pathak, S. Shastri & Chitrao S. Shastri: BORI, Poona, 1972

***Sphoṭasiddhiḥ*** - Maṇḍana Miśraḥ, edited by S.K. Ramanatha Sastri (Madras University Sanskrit Series, No. 6, 1931)

***Siddhāntakaumudī*** - Bhaṭṭojī-Dīkṣitaḥ, ed. & Tr. S.C.Vasu, Vol.1-2, Motilal Barasidas, Delhi, 1962

***Vaiyākaraṇasammata Vākyasiddhānta -Eka Dārśanika Vivecana***, Banamali Biswal, Bhāratīya Manīṣā-Darśana, Hindūstānī Akādamī, Allahabad, 2009

***Kāśikāvṛttiḥ*** *(Nyāsa-Padamañjarī-Sahitā)* Jayāditya Vāmana, Ed. D. Shastri, Prachya Bharatiay Prakashan, Tara Publications, Delhi

**A New Approach to Philosophy of Sanskrit Grammar,** Banamali Biswal. Padmaja Prakashan, 57, Vasant Vihar, Jhusi - Allahabad - 211019, 2007

***Vākyavādaḥ***, Translated and critically Edited with Explanatory Notes by Banamali Biswal, Journal of GNJKSV, Vol. 64, Rashtriya Sanskrit Sansthan, G.N.Jha Campus, Azad Park, Allahabad

***Vākyasiddhānta : Ek dārśanik vivecan***, Banamali Biswal, *Bhārataiya Manishadarśan*, Hindustani Akademi, Allahabad, 2009

***Vākyavādaḥ*** (Manuscript Accession No. 4333), Manuscript Library of Rashtriya Sanskrit sansthan, Ganganath Jha Campus, Allahabad

***Vākyavādaḥ*** (Manuscript Accession No. 281/7777 ), Manuscript Library of Rashtriaya Sanskrit Sansthan, Ganganath Jha Campus, Allahabad

***Vākyavādaḥ*** with ***Vākyadīpikā*** (Manuscript Accession No.280/7776), Manuscript Library of Rashtriaya Sanskrit sansthan, Ganganath Jha Campus, Allahabad

***Vākyavādaḥ*** with ***Vākyadīpikā*** (Manuscript Accession No. 34031), Manuscript Library of Rashtriaya Sanskrit sansthan, Ganganath Jha Campus, Allahabad



